किञ्च निश्चयप्रागभावो न दोषज्ञानेन शक्यते जनयितुं निश्चयस्तु वस्तुत्वाच्छक्यते गुणज्ञानादिना जनयितुम् । तस्मात्परत एवार्थतथात्वरूपप्रामाण्यं निश्चीयतइति पूर्वः पक्षः ।

सिद्धान्तस्तु न ज्ञानमव्यभिचारमुखेनैवार्थं निश्चाययति किन्तु स्वत एव। यदि हि स्वतो निश्चेतुं न शक्नुयात्तथा सति निश्चयासन्ताभाव एव स्यादित्यान्ध्यमेवाशेषस्य जगतो भवेत् । न हि स्वतोऽनिश्चितोऽर्थः परतो निश्चेतुं शक्यते। परस्यापि तद्वदेवासामर्थ्यात्। यथा हि घटज्ञानमसत्यपि घटे दृष्टमित्यनिश्चायकं तथाऽर्थक्रियाज्ञानमप्यसत्यामेवार्थक्रियायां स्वप्नावस्थायां दृष्टमिति न तेनापि सा निश्चेतुं शक्या नतरां तया घटनिश्चय इत्यायातमान्ध्यमशेषस्य जगतः। अथार्थक्रियाशब्देन नोदकाहरणादिकमुच्यते किन्तु ज्ञानमेव सुखात्मकं सर्वश्च सुखज्ञानं स्वात्मनि स्वत एव प्रमाणमव्यभिचारादित्युच्यते तथा सति भवतु नामार्थक्रियानिश्चयः तथापि तु न तया पूर्वज्ञानस्य शक्यं याथार्थ्यं विज्ञातुम्। अयथार्थादपि स्वप्ने चन्दनलेपादिना सुखोत्पत्तेः । अपि च गृहीताविनाभावया ऽर्थक्रियया पूर्वज्ञानविषयस्य निश्चयः अनुमानं ह्येतत्कार्यात्कारणगोचरम्, न चागृहीते सम्बन्धिनि सम्बन्धग्रहणसम्भवः। तेन सम्बन्धग्रहणसमये ऽवश्यं घटज्ञानादेव घटनिश्चयो ऽङ्गीकर्तव्यः। एवं गुणज्ञानसंवादज्ञानयोरपि वाच्यम् । न हि गुणज्ञानाद्गुणो ऽपि निश्चेतुं शक्यते किं पुनः पूर्वज्ञानप्रामाण्यम् तथा संवादो ऽपि । संवादो नाम तद्विषयं ज्ञानान्तरम् । तस्य पूर्वज्ञानात् को विशेषः येन पूर्वज्ञानानिश्चितमनेन निश्चीयते। यद्यपि वस्तुत्वाज्जन्यो निश्चयः तथापि ज्ञानेनैव जन्यते नान्येन । तस्मात्स्वत एव प्रामाण्यं परतश्चाप्रामाण्यं दोषज्ञानाद्बाधकज्ञानाद्वा निश्चेयम् । नन्ववस्तुत्वान्न दोषजन्यमप्रामाण्यं भवति अतज्जन्यं च न ततो ऽवधारयितुं शक्यम्।

उच्यते न तावन्निश्चयप्रागभावरूपमप्रामाण्यं दोषैर्गम्यतइति ब्रूमः किन्त्वर्थान्यथात्वरूपम् । तद्धि शक्यं दोषज्ञानेन निश्चेतुं दोषनिमित्तकत्वादयथार्थत्वस्य दुष्टेषु कारणेष्वयथार्थत्वदर्शनात् । वेदे ऽपि स्वतस्तावत्प्रामाण्यं दोषाभावादनपोदितं स्थितम् । कथं पुनरवगम्यते दोषनिमित्तमयथार्थत्वं न गुणाभावनिमित्तमिति सर्वत्र हि गुणविधुरेषु दुष्टेषु च कारणेषु अयथार्थत्वं ज्ञायते तत्र कुतो ऽयं विवेकः दोष एव निमित्तं न गुणवैधुर्यमिति[1]। तस्माद्यद्यपि परत एवाप्रामाण्योपलक्षणं तथापि गुणाभावादेवोपलक्षणसंभवाद्वेदे चाप्तप्रणीतत्वगुणायोगात्स्वरसप्राप्तप्रामाण्यस्यापि वेदस्य परत एव गुणाभावादप्रामाण्यमापद्यतइति । तदभिधीयते दृष्टानुसारिणी हि कल्पना भवति न दृष्टवैपरीत्येन । तेन वेदस्य स्वत एव प्राप्तं प्रामाण्यं यथा न विरुद्ध्यते तथा चैतत्कल्पयितुं शक्यते ततो विरुद्धं न कल्पयितुं युक्तम् । तेन यद्यपि प्रसिद्धेष्वयथार्थज्ञानेषु गुणाभावो दोषाश्च दृष्टाः[2] तथापि वेदे गुणाभावे ऽपि प्रामाण्यदर्शनात्तन्मा बाधीति दोषनिमित्तमेवायथार्थत्वं शुक्तिरजतादिज्ञानानां कल्प्यते । अन्यथा हि ज्ञानत्वनिबन्धनमप्ययथार्थत्वं कल्प्येत सर्वेष्वप्रमाणेषु ज्ञानत्वदर्शनात् तत्र यथार्थेष्वपि प्रत्यक्षादिषु ज्ञानत्वदर्शनान्न तन्निमित्तमयथार्थत्वम् एवं गुणाभावो ऽपि यथार्थो वेदे दृष्टत्वान्नायथार्थत्वस्य निबन्धनम् । असिद्धं तस्य यथार्थत्वमिति चेत् प्रत्यक्षादीनां वा कुतः सिद्धम् । स्वत इति चेत्तद्वेदे ऽपि समानमन्यत्र नास्तिक्याभिनिवेशात् । तस्मान्न तन्निबन्धनं प्रामाण्यम् । अपि च शुक्तिकारजतादिज्ञाने गुणाभावे ऽपि शुक्लभास्वरत्वादिरूपाणां तथाभूतानामेव दर्शनान्न गुणायत्तं यथार्थत्वं ज्ञानस्य । यदि तु

---

१ गुणवैधुर्यनिमित्तमिति १-२ पु. पाठः ।

२ दोषाश्च द्वयं दृष्टमिति १-२ पु. पाठः ।

स्वकारणादेव यथार्थत्वं दोषाच्चायथार्थत्वमिति तथा सति शुक्तिकारजतादिज्ञानानि स्वकारणवशाद्दोषाच्च तथाभूतं शुक्लत्वादि अतथाभूतं च रजतत्वादिकं गोचरयन्तीत्युपपन्नं भवति तस्मात्स्वतः सिद्धं प्रामाण्यं सर्वज्ञानानां तच्च वेदस्यानपोदितमिति सिद्धम् ।

पार्थसारथिमिश्रेण स्वतःप्रामाण्यनिर्णयः ।
व्याख्याविवादसंजातमोहव्यावृत्तये कृतः ॥ ४ ॥

विधितत्त्वे विमन्यन्ते बहुधा वादिनो यतः ।
अतो वार्तिककारीयैः क्रियते तत्र निर्णयः ॥ १ ॥

कः पुनरयं विधिः । के चिदाहुः प्रमाणान्तराशोचरो लिङादिशब्दमात्रालम्बनः कार्यात्मा यागादिभावार्थागोचरः स्वर्गकामादिनियोज्यमात्मानं प्रेरयन्नियोगो विधिरिति । कथं पुनरेवंविधे विधौ लिङादीनां व्युत्पत्तिः । अत्राहुः । लोके तावल्लिङादिशब्दश्रवणानन्तरं प्रयोज्यवृद्धं प्रवर्तमानमुपलभमानो व्युत्पित्सुः पार्श्वस्थो नूनमस्य कार्यावगतिः संजाता कथमन्यथा स्वतन्त्रः प्रवर्तते ईदृशी हि मे प्रवृत्तिः कार्यावगतिपूर्विकैव सर्वदा दृष्टा अस्यापि मदविशेषात् तत्पूर्विकयैवानया प्रवृत्त्या भवितव्यम् । सा च कार्यावगतिर्लिङादिशब्दानन्तर्यात् तत्कारणिकैवेति लिङादिशब्दानां कार्याभिधायित्वं निश्चिनोति । तत्र यद्यपि प्रवृत्त्यवगमयोरेकगोचरत्वात्प्रवृत्तेश्च क्रियागोचरत्वात्कार्यावगतिरापि तद्गोचरैव लिङादिभिर्जनितेति क्रियैव कार्यात्मिका लिङादिशब्दानामर्थः न तु तदतिरेक्यपूर्वमिति बुद्धिर्भवति तथापि वेदे षष्ठाद्यसिद्धान्तरीत्या कार्यं प्रति नियोज्यत्वेन स्वर्गकामादीनामन्वय इति स्थितम् । नियोज्यश्च स उच्यते यः कार्यं ममेदं कार्यमिति बुध्यते । न चाकामसाधनं कामी कार्यतया बोद्धुमलम् । विनश्वरी च क्रिया तेन नेयं कालान्तरीयफलदानेन कामिनं रमयतीति नानया फलोपभोगार्थिनः कामिनो युक्तः संसर्गस्तेन तदन्वययोग्यं स्थास्नु कार्यं क्रियातिरिक्तं लिङादिशब्दाभिधेयं[1] निश्चीयते तच्च प्रमाणान्तरापूर्वतया ऽपूर्वमिति च स्वात्मनि पुरुषं नियुञ्जानं नियोग इति च रव्यायते। तस्मिंश्च क्रियातिरिक्ते कार्ये

१ लिङादिशब्दाभिधेयमिति १-२ पु. नास्ति ।

वाच्ये यो लोके लिङादीनां क्रियायां प्रयोगः स लाक्षणिको भवति अनेकार्थत्वस्यान्याय्यत्वात्। एवञ्च नैमित्तिकनिषेधाधिकारयोरसत्यापि फलवत्त्वे ऽपूर्वमेव वाक्यार्थो भविष्यति तस्यैवाभिधेयत्वादिति। तदिदं बालसंमोहनं महेन्द्रजालोपमं वा सम्यक् न्यायौषधसंस्कृतस्वान्तानां न संमोहाय कल्पते। तथा हि।

न कार्यावगतिः क्वापि प्रवृत्तेः कारणं मता।
कर्तुरिष्टाभ्युपायत्वबोधात्सा सर्वदा यतः॥ २॥

यत्तावत्कार्यावगतिः प्रवृत्तिकारणमिति तत्र किं तत्कार्यं किञ्च तत्र प्रमाणमिति वक्तव्यं कृतिसाध्यं प्रधानं च कार्यमित्युच्यते तत्र कृतिसाध्यत्वं तावत्कृतौ सत्यां भावादसत्यां चाभावादन्वयव्यतिरेकाभ्यामवगम्यते। प्राधान्यं तु तदुद्देशेन कृतेः प्रवृत्तिर्मानसप्रत्यक्षेणावगम्यते। कृतिर्हि पुरुषप्रयत्नः स च मानसप्रत्यक्षवेद्यो यदुद्देशेन प्रवर्तते तद्विशिष्ट एव प्रत्यक्षेणावगम्यते। सर्वो हीदमुद्दिश्याहं प्रवर्तइति प्रवृत्तिवेलायामेव विशिष्टोद्देश्यसम्बन्धिनं प्रयत्नं प्रत्यक्षेण जानातीति। प्रत्यक्षानुमानप्रमाणकं कार्यमिति चेत् किमिदानीं कृत्युद्देश्यत्वमात्रं कार्यत्वम्। यद्येवं ततो यदेव किञ्चिद्रागद्वेषलोभादिभिरनर्थरूपमर्थतयोद्दिश्य पुरुषः प्रवर्तते तत्सर्वं कार्यं प्राप्तम्। तत्र को दोषः नैवंविधकार्यावगतिः प्रवृत्तिकारणं भवितुमर्हति सत्यामपि तस्यां प्रवृत्त्यदर्शनात्। यो हि मोहात्सर्पायाङ्गुलिदानमुद्दिश्य प्रवर्तमानो मध्ये तस्यानर्थत्वं जानाति स तावत्ततो निवर्तते तत्र कार्यता तावदुद्दिश्य प्रवृत्तैवाङ्गुलिदानस्य संजाता तन्मात्रलक्षणत्वात्कार्यतायाः। सा च पश्चादनर्थत्वावगमे ऽपि न बाध्यते। न खलु जानन्नप्यनर्थमुद्दिश्य न मे प्रवृत्तिः संजातेत्यध्यवस्यति किन्त्वनर्थमेवोद्दिश्य मोहात्प्रवृत्तो ऽस्मीत्यवगच्छति। तस्मात्प्र-

त्यक्षप्रमाणिका येयं कृत्युद्देश्यत्वमात्ररूपा कार्यता न तदवगतिः प्रवृत्तिकारणमिति सिद्धम् ।

अथ कृत्युद्देशार्हता कार्यता सा केन प्रमाणेन प्रतीयते? न तावत्प्रत्यक्षेण। प्रवृत्त्यवस्थायामपि कर्मणः कार्यत्वसन्देहात् । भवति हि सन्देहादपि कचित्प्रवृत्तिः। तत्र यः कार्यत्वं संदिहान एव कचिद्व्यापारे प्रवृत्तः स प्रवृत्तिवेलायामपि न कार्यतां प्राक्फललाभान्निश्चिनोति। वदन्ति हि न विद्मः कार्यमकार्यं वेति सन्देहादेव प्रवर्तामहइति। मा भूत्प्रवृत्तिवेलायां प्रत्यक्षं कार्यत्वं फलवेलायां भविष्यतीति चेत् कस्य पुनस्तदानीं कार्यत्वं प्रत्यक्षगम्यम्। न तावत्क्रियायाः नष्टत्वात् नापि फलस्य तस्य सुखरूपमात्रोपलम्भात्। न हि कार्यत्वं नाम किञ्चिदत्रावगम्यते । यो हि दैवनिर्मितमेघच्छायाजन्यं सुखमनुभवति यश्च प्रयत्नजनितमातपत्रच्छायाजन्यं तयोरुभयोरपि प्रत्यक्षा सुखोपलब्धिस्तुल्यैव न कृतिजन्ये सुखे कार्यत्वं नाम कश्चिदतिरेकः प्रत्यक्षमीक्ष्यते । भवतु वा सुखस्य प्रत्यक्षगम्या कार्यता तत्साधनस्य तु व्यापारस्य न कदा चित् प्रत्यक्षेण कार्यता ऽवगम्यते नाऽनुमानेन न हि सुखस्य दृष्टं कार्यत्वं तत्साधने ऽनुमातुं शक्यम् ।

स्यादेतत् । कृत्यर्हता नाम कार्यता सा च यदाकारं वस्तु प्रतिपद्य तदुद्देशेन पुरुषस्य प्रवृत्त्यौत्सुक्यं जायते तदाकारभागितैव। कः पुनरसावाकारः समीहितरूपत्वं तत्साधनत्वं वा। तादृशे ह्यर्थे स्वरसादेव पुरुषाणां प्रवृत्त्यौत्सुक्यं जायते। द्विविधं च समीहितं सुखं दुःखाभावश्च । तत्र सुखं प्रत्यक्षगम्यं दुःखाभावस्त्वनुपलब्धिगम्यः तत्साधनता चान्वयव्यतिरेकगम्येति न प्रामाणिकी कार्यतेति युक्तमेतत् किन्त्वेवं सति सुखदुःखपरिहारातिरिक्तेषु तत्साधनतैव प्रवृत्तिकारणमङ्गीकृतं स्यात् ततश्च गामानयेत्यत्र गवानयनस्य सुखदुःखप्राप्तिपरिहार-

त्वाभावात् प्रवृत्तिहेतुभूतां कार्यतामभिदधानो विधिशब्दः समीहितसाधनताभिधायी स्यात् तेन कार्यं गवानयनं कृत्यर्हं यथाविधे पुरुषाणां कृतिः प्रवर्तते तथाविधमित्यर्थः। तथाविधता तावन्न स्वयं समीहिततया सम्भवतीति तत्साधनतैव पारिशेष्यात्कार्यवाचिना शब्देनाभिहिता भवति तथा च वेदे ऽपि अपूर्वस्य स्वयं सुखदुःखपरिहाररूपत्वाभावात्तत्साधनतैव कृत्यर्हतेति कार्यरूपमपूर्वमभिदधानो लिङ् समीहितसाधनतामेवाभिदध्यादिति नैमित्तिकनिषेधाधिकारयोरपि [1]साधनरूपापूर्वाभिधानात्तद्बलेनैवाश्रुतमपि फलं कल्पनीयं स्यात्। ननु न सुखत्वं कार्यत्वं तत्साधने ऽपि भावात् न साधनत्वं सुखे ऽपि भावात्। तदुभयानुगतं कार्यबुद्ध्यालम्बनं कार्यत्वं नाम प्रवृत्तिकारणमिति। मैवम् न हि साधने कार्यत्वं नाम किञ्चित्प्रवृत्तिवेलायामुत्तरकाले वा प्रत्यक्षेणावगम्यतइत्युक्तम्। अतो नास्त्युभयानुगतः कार्यत्वं नाम कश्चिदर्थविशेषः। कर्तव्यशब्दस्त्वयमेकोपाधिवशादुभयत्र प्रवर्तते तद् द्वयमपि साध्यमानं स्वोद्देशेन पुरुषं प्रवर्तयतीति अनेनैवोपाधिना कार्यशब्दप्रवृत्तिः। तस्मान्न कार्यतावगतिः क्रियायां प्रवृत्तिकारणम् अपि तु समीहितसाधनत्वज्ञानम्। भवतु वा समीहितसाधनत्वोपपन्नमेव कार्यत्वं तत्तु क्रियाया एवाभिधातव्यम्। तत्रैव प्रवृत्तिदर्शनात्। सत्यं लोके क्रियैव कार्यतया शब्देन प्रतिपाद्यते वेदे तु फलकामिनियोज्यान्वयानुगुण्यात्स्थिरमेव कार्यं लिङादिभिरभिधीयतइति चेन्मैवम्। क्रियायामपि कामिनः कार्यतावगमाविरोधात्। नासौ फलसाधनीभवितुं समर्था भङ्गुरत्वादिति चेन्न अपूर्वद्वारेणोपपत्तेः। नान्यद्वारेणान्यस्य साधनत्वं सम्भवत्यतिप्रसङ्गात्। अवान्तरव्यापारो वा शक्तिर्वा साधनत्वमुपपादयति

(१) फलसाधनेति प. पु. पाठः।

नापूर्वम् । तथा शक्तिमति व्यापारवति वा ऽतीते शक्तिव्यापारयोः स्थित्यनुपपत्तेरिति चेत् किमिदानीं काष्ठानां पाकसाधनत्वं नास्ति तत्रापि हि काष्ठेभ्यस्तैजसाः परमाणवः समुद्गताः स्थाल्युदरमनुप्रविशन्तस्तण्डुलान् विक्लेदयन्ति । न च तेषां द्रव्यरूपाणां काष्ठावान्तरव्यापारत्वं तच्छक्तित्वं वा समस्तीति न तद्द्वारेण काष्ठादीनां साधनभावः स्यात् । मा भूदिति चेन्न सर्वलोकप्रसिद्धिविरोधात् । काष्ठैः पचतीति निर्विवादप्रयोगात् । तस्माद्यदेव येन समीहितफलोद्देशप्रवृत्तेन तदुपायभूतमन्तरा साध्यते तदेव तस्याऽवान्तरव्यापारत्वेनाभिधीयते । तेन सम्भवत्येवापूर्वस्य कर्मावान्तरव्यापारत्वम् । यदि चैवं नेष्यते ततो ऽपूर्वं प्रत्यपि साधनत्वं कर्मणो न स्यात् तदपि न कर्मानन्तरं जायते स्विष्टकृदाद्युत्तरतन्त्रानुष्ठानप्रतीक्षणात् । तत्रावश्यमुत्पत्त्यपूर्वाण्यवान्तरव्यापारत्वेनैषितव्यानि । उत्पत्त्यपूर्वाण्येव परमापूर्वस्य कारणानि न यागादीनीति चेत् न असिद्धत्वादशब्दार्थत्वाच्च । अधिकारवाक्ये फलकामिनियोज्यान्वयानुगुणापूर्वाभिधायित्वे स्थिते पश्चादाग्नेयादिवाक्येष्वपूर्वाभिधानसिद्धिः प्राक्च लोकावगतक्रियाभिधायित्वमेव तेषु सम्भवतीत्यसिद्धत्वादुत्पत्त्यपूर्वाणां न परमापूर्वसाधनत्वेनान्वयसम्भवः । न च यजतेरपूर्वाभिधायित्वं येनावान्तरापूर्वाणां प्रत्ययार्थपरमापूर्वं प्रति कारणत्वं स्यात् । तस्माद्यजिरेव करणम् । किञ्च कार्यत्वमेवापूर्वस्य नोपपद्यते कृतिसाध्यं हि कार्यमुच्यते कृतिश्च पुरुषप्रयत्नः न च प्रयत्नसाध्यता ऽपूर्वस्य सम्भवति चिरविनष्टे प्रयत्ने तदुत्पादात् । प्रयत्नेन हि यागः ततो ऽवान्तरापूर्वं ततः पश्चादधिकारापूर्वं तस्मात्कार्यत्वानुपपत्तेर्न कार्याभिधायिलिङ्वाच्यता ऽपूर्वस्य संभवति तत्रावश्यं प्रयत्नसाध्यत्वमपूर्वस्य यागावान्तरापूर्वद्वारमाश्रयितव्यम् । तद्वद्यागस्यापि फलसाध-

नत्वमपूर्वद्वारं किमिति नेष्यते मा वा भूत् फलसाधनं क्रियापूर्वं साधनं तावद्भवत्येव तावतापि कार्यतया तामवगन्तुमर्हत्येव पुरुषः यस्मिन् अकृते समीहितं न प्राप्यते कृते च प्राप्यते साक्षात्प्रणाड्या वा तदेव कार्यतया बुद्ध्यते न तु साक्षाद्भावविशेषस्तत्रोपयोगी। अवश्यं च कामिनः क्रियायामपि कार्यावगतिरेषितव्या। कथमन्यथा स्वतन्त्रः प्रवर्तते। सत्यमस्त्येव तत्रापि कार्यावगतिः न तु शाब्दी किन्तर्ह्यर्थी कामानुगुणापूर्वसाधनत्वात्। तामपि कार्यतया कामी प्रतिपद्यतइति चेन्न विकल्पासहत्वात्। किं फलप्रसूता कार्यावगतिः क्रियायामुतापूर्वप्रसूता। न तावदपूर्वप्रसूता काम्येषु विधेरनुष्ठापकत्वानभ्युपगमात्। यदि हि विधिनिबन्धना कार्यावगतिः क्रियायाः स्यात् ततो विध्याक्षिप्तानुष्ठानतया करणांशस्यापि विधेयत्वप्रसङ्गः। फलप्रसूतत्वमपि भवदुक्त्या नीत्या न सिध्यति न हि फलकामः पुरुषः क्षणिकं कर्म कार्यतया ऽवगन्तुमलम्। तस्याः साक्षात्साधनत्वायोगात् अपूर्वस्य चावान्तरव्यापारत्वाभावात्तद्द्वारेणाप्यसाधनत्वात्। साधनसाधने च साध्यार्थिनः कार्यावगमानुपपत्तेः। तस्मात् क्रियायाः कार्यत्वावगतिः न फलायत्ता नापि विध्यायत्ता संभवतीत्यननुष्ठानमेव तस्याः प्रसज्ज्येत। तस्मादविधिप्रसूतं काम्यानुष्ठानं फलायत्तमिच्छता ऽवश्यं क्रियायाः फलसाधनता वा साधनसाधने ऽपि वा साध्यार्थिनः कार्यावगतिरेषितव्या। ततश्च शब्देनापि शक्यतएव फलकामस्य कार्यतया क्रिया प्रतिपादयितुमिति नापूर्वाभिधानसिद्धिः। यच्चान्यदुक्तव्यं तत्सर्वमङ्गनिर्णयएव वक्ष्यामः। अन्यन्मतं समीहितसाधनत्वमेव भावनाया लिङा ऽभिधीयते। तदवगतेरेव प्रवृत्तिकारणत्वेनात्मनि दृष्टत्वात्। नन्विच्छैव प्रवृत्तिकारणम्। सत्यं सा तूत्पन्ना प्रवृत्तिकारणं नावगता। शब्दस्य च प्रमाणत्वाद-

वगतिजननद्वारेण प्रवृत्तिकारणत्वमिति नेच्छाभिधायित्वसम्भवः । इच्छा हि सुखदुःखप्राप्तिपरिहारयोरन्यतरत्तदुपायं चाधिकृत्य समुत्पद्यते तेन लिङ्शब्दानन्तरं प्रवर्तमानस्य प्रयोज्यवृद्धस्य प्रवृत्तिहेतुभूतेच्छासंपादकत्वेन समीहितसाधनत्वावगतिरेव क्रियायां व्युत्पित्सुना कल्प्यते । तस्याश्च शब्दानन्तर्याच्छब्दस्य तदभिधायित्वं निर्णीयते । ननु मदिरास्वादस्य समीहितसाधनत्वादनुष्ठानं स्यात् । न प्रबलेन द्वेषेण निरुद्धत्वात् यथैव हीच्छा प्रवृत्तेः कारणं तथैव द्वेषो ऽपि निवृत्तेः । द्वेषश्च दुःखसुखपरिहारतदुपायानधिकृत्य प्रवर्तते सुरापानं च महानर्थसाधनत्वेन निषेधेन प्रतिपादितं द्वेषगोचरतया नानुष्ठातुमर्हति । यस्तु सन्निहितेनाल्पीयसापि सुखेनाक्रान्तस्वान्तो महान्तमनर्थं नालोचयति न वा ऽऽद्रियते स प्रबलेन रागेण प्रतिक्षिप्यमाणचित्तः प्रवर्ततएव सुरापाने । तस्मात्समीहितसाधनत्वेन भावनाविधिना सामान्येन बोधिता पदान्तरसमर्पितेन स्वर्गादिना निराकाङ्क्षीभवतीसेतत्स्वर्गकामाधिकरणे व्युत्पाद्यते । यत्र फलविशेषसमर्पकं पदान्तरं समानवाक्ये नास्ति तत्र प्रकरणादिना फलं कल्प्यं भवतीति प्रकरणाधिकरणे व्युत्पाद्यते । प्रकरणादीनामप्यभावे अर्थवादोत्थेन फलेन समन्वय इति रात्रिसत्राधिकरणे स्थितम् । तस्याप्यभावे ऽध्याहृतेन फलेनान्वय इति विश्वजिदधिकरणे सिद्धम् । धात्वर्थस्तु सर्वत्र समानपदोपात्तो ऽपि बलीयस्या विधिश्रुसा साध्यांशात्प्रच्यावितः प्रत्यासत्त्या करणांशेन निविशतइति भावार्थाधिकरणार्थः । तथा चोक्तम् ।

तथा धात्वर्थकार्यत्वे[1] पदश्रुसोपदर्शिते ।
भावनाया विधिश्रुसा पुरुषार्थांशसाध्यतेति ॥
श्रेयःसाधनता ह्येषां निसं वेदात्प्रतीयतइति च ।

(१) कर्मत्वइत्युभयपुस्तकपाठः ।

तस्मादिष्टसाधनतैव विधिर्लिङाद्यभिधेयेति तद्युक्तायाः भावनायाः फलमेव भाव्यं धात्वर्थस्तु करणमिति। आचार्यस्य तु “अभिधाभावनामाहुरन्यामेव लिङादयः” इति वदतो ऽन्यादृशं विधितत्त्वम् अभिमतं लक्ष्यते । किं पुनस्तदुच्यते । इदं तावत् सिद्धं यथा समीहितसाधनत्वावगतिमन्तरेण चेतनस्य स्वतन्त्रा प्रवृत्तिर्न घटते इति लिङ्शब्दश्रवणानन्तरं प्रवर्तमानस्य पुरुषस्य समीहितसाधनत्वावगतिः शब्दात्संजातेति कल्पनीयम् तच्च समीहितसाधनत्वं किमभिधानत एवोपात्तं किं वा ऽर्थान्तराभिधायिना विधिशब्देन तदनुपपत्त्या बोधनीयमिति चिन्तनीयम् । तत्र नाभिधायकता युक्ता संविद्विरोधात् । न हि यागानुरक्तो व्यापार इष्टार्थहेतुरित्यस्माद्यजेतेत्यस्माच्च शब्दात्तुल्या ऽवगतिः सहप्रयोगाच्च । लोके हि समीहितसाधनतावचनो विधिशब्दश्च युगपत्प्रयुज्यमानौ दृष्टौ माणवक सन्ध्यामुपासीनस्य ते ऽभ्युदयो भविता तस्मात्संध्यामुपास्वेति न च पर्याययोः सह प्रयोगो भवति । लोकप्रमाणकश्च शब्दार्थावगम इति नेष्टसाधनताभिधायित्वं लिङादीनाम्। तस्माद्वरं कार्याभिधायित्वमेवाश्रयितुम्। नन्वेतदयुक्तं कार्यमिति यदि कृतिं प्रति उद्देश्यमभिधीयते ततस्तादृशी कार्यता सर्ववस्तूनामविशिष्टेति न तदवगतिः प्रवृत्तिहेतुः । पारिशेष्यात् कृत्यर्हता कार्यता वक्तव्या तदवगतिर्हि प्रवृत्तिहेतुः कृत्यर्हता च न सुखदुःखपरिहारतदुपायव्यतिरेकिणी का चिदस्ति तेनानयनादिक्रियाणां स्वरूपेण सुखदुःखपरिहाररूपत्वाभावात् तदुपायत्वमेव कृत्यर्हतेति क्रियादिविषयायाः कार्यावगतेः प्रवृत्तिहेतुभूतायाः समीहितसाधनत्वमेवावलम्बनम् । तदुक्तम् ।

कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीरिति ।
पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तक इति च ॥

तेन लिङ्शब्दोऽपि कृत्यर्हतारूपकार्यमभिदधत् समीहितसाधनत्वमेवाभिदध्यादिति न तन्मतादस्य विशेषः स्यात्। उच्यते अयमस्ति विशेषः यत्समीहितसाधनता न तत्स्वरूपेणाभिधीयते किन्तु लिङ्शब्दः कृत्यर्हतारूपं सुखदुःखपरिहारतदुपायसाधारणमभिदधाति। तस्मिंस्त्वभिहिते क्रियायाः स्वयं सुखत्वाद्यभावात्पारिशेष्यात्तदुपायत्वं निश्चीयते। तथा च कर्तव्यतावचनो भावनायां पुरुषं प्रवर्तयतीति भूयान्भाष्यवार्तिकयोर्व्यवहार इति। इदमपि मतम्[१] अभिधाभावनामाहुरित्याद्यनुगतम्। किञ्च कार्यशब्देनापि सह विधिशब्दः प्रयुज्यते कार्यं ते सन्ध्योपासनमतः तत्कुरुष्वेति। यद्यपि चायं प्रयोगः कर्तृकर्मगतसंख्याभिधानभेदेनात्यन्तापर्यायत्वादुपपद्यते तथाऽपि न कार्यस्य लिङर्थता युक्ता। तथा हि अकार्येऽप्यर्थे कार्यतामङ्गीकृत्य लिङादिप्रयोगो याच्ञायां दृश्यते कश्चिद्धि कञ्चिदेवं याचते यद्यप्येतत्तव निषिद्धत्वादकार्यमेव तथाऽपि मत्कृते कुरुष्वेति। कार्यार्थत्वे तु व्याघातः स्यान्न ह्येवं प्रयुज्यते यद्यप्येतदकार्यं तथापि कार्यमिति एवं ब्रुवन् हास्यो भवति। तस्मात्कृत्यर्हता विधिश्च भिन्नावर्थौ। किं पुनरिदमभिधाभावनेत्युक्तं सर्वशब्दानामेवार्थप्रतीत्युन्नेयो ऽभिधाभिधानो व्यापारः समस्ति लिङादीनां त्वसौ व्यापारः पुरुषप्रवृत्तिभवनफलत्वाद् भावनेति[२] प्रवर्तनेति च गीयते। कश्चिदाह न शब्दव्यापारः सम्भवति गुणत्वात् द्रव्यत्वे ऽपि विभुत्वादिति। तदयुक्तम् गुणस्याप्यरुणादेर्द्रव्यावच्छेदव्यापारदर्शनात्। विभूनां चात्मादीनां ज्ञानादिव्यापारसंभवात्। स्पन्दसमवायस्तु न संभवति न चासावस्माभिः शब्दस्येष्यते। कस्तस्य व्यापारः स्वज्ञानमेव

१ अभिमतम् इति द्वि. पु. पा.
२ प्रवृत्तिसाधनत्वात् इति प्र. पु. अधिकम्।

तज्जनितो वा संस्कारस्तद्योगी हि शब्दोऽर्थप्रतीतिं जनयति। तथा चोक्तम्। "शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानमि"ति। "पूर्ववर्णसंस्कारसचिवोऽन्त्यवर्णो वाचक" इति च। यदाऽयमागन्तुकं धर्मं प्राप्य कार्याय पर्याप्तो भवति स एवागन्तुकधर्मस्तस्य व्यापार इत्युच्यते तेन ज्ञानसंस्कारयोः शब्दव्यापारत्वमुपपन्नम्। ननु ज्ञानस्याभिधात्वमयुक्तं ज्ञानं प्रति हि कर्मीभूतः शब्दः कर्तृत्वं करणत्वं वा तस्याभिधानं प्रत्यभ्युपगम्यते स कथमेकस्मिन्नेव व्यापारे कर्मत्वं कर्तृत्वकरणत्वयोरन्यतरच्च प्रतिपद्येत। परशुवदिति ब्रूमः परशुर्ह्युद्यमननिपातनयोः कर्माऽपि सन् तरुद्वैधीभावलक्षणफलावच्छेदेन छिनत्तिपदाभिधानयोस्तयोरेव करणं भवति सर्वमेव हि करणं कर्तृव्यापारगोचरः। तथा ज्ञानस्य शब्दविषयस्याप्यर्थप्रतिपत्तिलक्षणफलावच्छेदलब्धाभिधाभिधानस्यार्थ एव कर्म। शब्दस्तु फलान्तरप्रवृत्तव्यापारव्याप्यतया तस्यामवस्थायां करणम्। स्वातन्त्र्यविवक्षायां च कर्तृत्वमनवद्यम्। अनेनैव न्यायेनार्थकर्मकस्याप्यभिधाव्यापारस्य पुरुषप्रवृत्तिभवनफलावच्छेदलब्धशब्दभावनाभिधानस्य पुरुषप्रवृत्तिफलावच्छेदलब्धप्रवर्तनाभिधानस्य च प्रवृत्तिकर्मत्वं पुरुषकर्मत्वं च व्याख्यातम्। तेनैक एव व्यापारो यदा जानातिना विषयप्रकाशनफलावच्छिन्नोऽभिधीयते तदा विषयीभूतः तत्फलताकशब्द एव कर्म भवति शब्दं जानातीति यदा तु स एवार्थप्रतिपत्तिफलावच्छिन्नोऽभिदधातिनाऽभिधीयते तदा प्रतिपत्तिरूपफलभागर्थः कर्म भवति अर्थमभिदधाति शब्द इति यदा तु स एव पुरुषप्रवृत्तिफलावच्छिन्नो भावयतिनाऽभिधीयते तदा भवनफलभाक् प्रवृत्तिः कर्म भवति प्रवृत्तिं भावयति शब्देनेति यदा तु पुरुषप्रवृत्तिफलावच्छिन्नव्यापाराभिधायिना प्रवर्तयतिनाऽभिधीयते तदा प्रवृत्तिफलभाक् पुरुषः कर्म भवति

पुरुषं प्रवर्तयतीति एवं संस्कारे ऽप्यभिधाव्यापारे यथासम्भवं योज्यम् । न हि व्यापारस्वरूपापेक्षः कर्मभावः तथा सति चलत्यभिहिता ऽपि क्रिया गच्छत्यभिहितेव सकर्मिका स्यात् । तथा प्रयत्नो ऽपि करोतिभावयतिभ्यामिव प्रयतिना ऽप्यभिहितः सकर्मकः स्यात् । तथा छेतृव्यापारो ऽप्युद्यच्छतिनियच्छतिभ्यामिव छिनत्तिना ऽप्यभिहितः परशुकर्मकः स्यात् । ताभ्यामेव वाभिहितः छिनत्त्यभिहित इव वृक्षकर्मकः स्यात् । तस्मादेक एव व्यापारः फलभेदेन निरूप्यमाणस्तं तं कर्मभेदं भजते यदा फलानपेक्षेण स्वरूपेण निरूप्यते प्रयततेचलतीत्यादिभिस्तदा ऽकर्मको भवति । यदा तु फलाधीननिरूपणीयेन रूपेण निरूप्यते तदा सकर्मकः तत्र येन धातुना यत्फलाधीननिरूपणं येन रूपेण क्रिया ऽभिधीयते तद्धातूक्तायां क्रियायां तत्फलभाग् वस्तु कर्म भवति । यत्तु केन चिदात्मनो ज्ञानकर्मतां निराकुर्वता परसमवेतक्रियाफलभागित्वं कर्मलक्षणमुक्तं तदतिव्यापकं पूर्वोक्तेष्वपि परश्वादिषु छिदादिकर्मत्वप्रसङ्गात् । अव्यापकं च देवदत्तः पावमानीभिरात्मानं पुनातीत्यादिषु स्वसमवायिक्रियाफलभागित्वेनापि देवदत्तस्य पुनातिकर्मत्वात् । तथा च वेदे "पुनात्येवाग्निं पुनीत आत्मान"मिति प्रयोगो दृष्टः । तस्मात्पूर्वोक्तमेव कर्मलक्षणम् । न चैवं गतौ गन्तुः कर्मत्वप्रसङ्गः गच्छतिर्हि गन्तव्यप्राप्त्यधीननिरूपणीयेनैव रूपेण क्रियामभिदधातीति ग्रामादेरेव तत्कर्मत्वं न गन्तुः । एवञ्च ज्ञेयावभासफलाधीननिरूपणीयेनैव रूपेण जानाति संविदित्यादिभिरभिहितायां ज्ञानक्रियायामात्मनो ऽप्यहंवित्तौ भासमानत्वात्कर्मत्वं समर्थितम् । आह अस्त्वभिधा व्यापारः न त्वस्य पुरुषप्रवर्तकत्वं लिङभिधेयत्वं च संभवति न हि प्रेक्षाकारी कश्चिदभिधामात्रावगमात्प्रवर्तते समीहितसाधनत्वावगमाधीनत्वात्प्रवृत्तेः । न चा-

सावर्थप्रतिपत्तिलक्षणफलोन्नेया शब्दान्तराभिधावदभिधेया ऽपि भवितुमर्हति । उच्यते सत्यं फलसाधनत्वं प्रवर्तकत्वं तत्तु न शब्दस्याभिधेयमित्युक्तम् । अतो व्युत्पित्सुर्बालकः प्रयोज्यवृद्धं प्रवर्तमानमुपलभ्य प्रवृत्तिहेतुभूतामिष्टसाधनतावगतिं शब्दजनितामध्यवसाय पूर्वोक्तेन न्यायेन साक्षाच्छब्दस्य जनकत्वासंभवाद्येनाभिहितेन फलसाधनत्वं कल्पयितुं शक्यते तदभिधायी लिङ्शब्द इति निश्चिनोति । ततः स्वव्यापारस्यार्थप्रतिपत्त्यैव कल्पितस्य प्रवर्तनारूपेणाभिधानं लिङादिभिः कल्प्यते । प्रवृत्तिफलता च प्रवर्तनारूपता । न चैवंरूपता ऽर्थप्रतिपत्त्यैव कल्पयितुं शक्येत्यनन्यलभ्यत्वादभिधान्तरविलक्षणां लिङ्शक्तिं कल्पयति । एवंविधविध्यवरुद्धा च भावना पुरुषार्थसाधनतया[1] निश्चीयते । न ह्यपुरुषार्थफलस्य व्यापारस्य प्रवर्तनारूपविध्यन्वयसंभवः । प्रेक्षापूर्वकारिणां निष्फले प्रवर्तयितुमशक्यत्वात् । तदेवमभिधाव्यापारमेव प्रवर्तनारूपेणाभिदधाना लिङादयस्तद्बलादेव फलसाधनत्वं बोधयन्ति । नन्वस्मिन् पक्षे प्रवर्तनारूपस्य विधेः प्रवर्त्यापेक्षत्वात्प्रवर्त्यसमर्पकत्वेनैव स्वर्गकामादिशब्दाः संबध्येरन्न फलसमर्पकतया । तथा नामेति केचित् । न चैवमफलताप्रसक्तिः प्रवर्त्यत्वानुपपत्त्यैव काम्यमानस्य फलत्वकल्पनात् । भाष्यवार्तिकयोस्तु फलपरत्वमेव स्वर्गकामादिशब्दानां लक्ष्यते, युक्तं चैतत् तथा हि यद्यस्मिन् पक्षे कार्यात्मकविधिपक्षवत् कर्तृनियोज्ययोरभेदापत्तिः विधेयक्रियाविषयं कर्तृत्वं विधिविषयं तु नियोज्यत्वमिति विषयभेदात् तथा ऽपि न तत्परत्वं कामशब्दानां युक्तम् अप्राप्तार्थपरं हि शास्त्रम् इह च विधिवशा[2]देवैतावदवगतम् अस्ति कश्चिन्नियोज्यः स चासौ यो ऽस्य

---

[1] फलनयेति उभयपु. पाठः

[2] विधिशब्दवशादिति प्र. पु. पाठः

विध्यन्वितस्य व्यापारस्य शेषी समर्थश्चानुष्ठातुं न ह्यस्वार्थव्यापारे कश्चित्प्रवर्तयितुं शक्यते । नाप्यसमर्थः स एव वा शेषी यदभिलषितफलसाधनो ऽयं व्यापार इत्येतावति कामशब्दमन्तरेणैवावगते फलविशेषमात्रे चाऽनवगते तत्परत्वमेव कामशब्दानां युक्तम् । तदेवं विधिशब्देनैव प्रवर्तनारूपविधिमभिदधता ऽर्थाद्विधेयस्य कर्तव्यता फलसाधनता चाववोध्यतइत्यभिप्रायेण कर्तव्यतावचनः प्रत्ययः "श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयत" इति च व्यवहारः । ननु स्वव्यापारे ऽभिधीयमाने स्वरूपाभिधानप्रसङ्गः न ह्यनभिधाय विशेषणं विशिष्टमभिधातुं शक्यम् । मैवं वोचः । उक्तं हि ।

"विशिष्टग्रहणं नेष्टमगृहीतविशेषणम् ।
अभिधानाभिधाने तु न केन चिदिहाश्रिते" इति ॥

तुल्यं चैतदिष्टसाधनताविधिपक्षे ऽपि तत्रापि तु नेष्टसाधनतामात्रं विधिःअपि तु [कर्तुमसम्भवात्पारिशेष्यात्] कर्तुरिष्टसाधनता न चाख्यातं कर्त्रभिधायि तत्रावश्यं भावनाक्षेपावगतकर्तृविशेषितेष्टसाधनता ऽभिधीयतइत्याश्रयणीयम् । तथा ऽस्मिन् पक्षे प्रत्यक्षावगतलिङ्शब्दादिभ्यः प्रवर्तनावगतेः न शब्दस्वरूपविशिष्टाभिधाव्यापाराभिधानादिदोष इति । न्यायविदां त्विष्टसाधनत्वमेवाभिमतं न च संविद्विरोधः तेन रूपेणाभिधानाभावात् प्रवर्तनारूपेण तु शब्दो ऽभिधत्ते प्रवृत्तिहेतुश्च धर्मः प्रवर्तना सा चापौरुषेये वेदे प्रैषादीनामसंभवात्पारिशेष्यादिष्टाभ्युपायतैव निश्चीयते । तेनाभिधाव्यापारप्रवर्तनाभिधानवत्प्रवर्तनारूपेणेष्टसाधनतां शब्दो ऽभिधत्ते न स्वरूपेणेति न प्रतीतिविरोधः । इदमेव भगवतो मण्डनमिश्रस्यापि ।

---

[ ] एतच्चिन्हस्थः पाठो नास्त्युभयत्र.

"पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः ।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥

एवङ्कारश्च प्रवर्तनाप्रत्यय" इत्यादि वदतोऽभिमतम्। एवञ्चा-नेकार्थत्वं कल्पितं न भवति इतरथा हि प्रेषणमध्येषणमभ्यनुज्ञान-मिष्टसाधनत्वञ्चेति बहवोऽर्थाः शब्दस्य कल्प्येरन् । प्रवर्तनासा-मान्यवाचित्वे तु लाघवं स्यात् तत्रापि तु रागद्वेषमोहादीनां प्रवृत्ति-हेतूनामवाच्यत्वादेवं वक्तव्यं योऽवगम्यमानतया प्रवृत्तिहेतुस्तद-भिधायी लिङ्शब्द इति। न च कार्यमेव ज्यायः समकनीयोभिः प्र-तिपाद्यमानं प्रैषादिव्यपदेशभाक् सर्वानुगतं शब्दार्थ इति सांप्रतम्। अकार्यत्वाभ्युपगमेनैव याच्ञायां लिङ्प्रयोगादित्युक्तम्। तस्मा-त्प्रवर्तनासामान्यं शब्दार्थः । एवञ्च ।

विशेष एव शब्दार्थो दृष्टरूपान्वयोऽपि हि ।
न च प्रवर्तनाबाध इष्टशक्तेर्विनार्थवान् ॥

इत्यत्र श्लोके पूर्वार्धेन परमतमुपन्यस्योत्तरार्धेन स्वमतमु-पन्यस्तवानिति व्याख्यातव्यम् । प्रवर्तनासामान्यमभिदधता लिङ्शब्देन निर्विशेषसामान्यबोधस्यानर्थक्यापत्तेरपौरुषेये च वेदे पुरुषधर्माणां प्रैषादीनां विशेषाणामसम्भवात्पारिशेष्यादि-ष्टसाधनतैव बोध्यतइति। "अभिधाभावनामाहु"रित्यस्यापि वार्ति-कस्यायमेवार्थः । अभिधीयत इत्यभिधा प्रवर्तना कर्तव्यता वा सैव च पुरुषप्रवृत्तिं भावयतीति भावना तामाहुरिति। अथ वा अभि-धायाः शब्दस्य भावना अभिधाभावना सैव प्रवर्तना परसमवेता-ऽपि शब्देन पुरुषं प्रवर्तयता तत्सिद्धयेऽभिधीयमाना शब्दव्यापार-त्वेनोच्यते तामाहुरिति। अथ वा इष्टसाधनताऽभिधानमभिधा सैव विधानं विधिरिति व्युत्पत्त्या विधिरित्युच्यते सैव च भूतिकर्तृत्वं प्रतिपद्यमानायाः पुरुषप्रवृत्तेः प्रयोजकस्य शब्दस्य व्यापारो भा-वना तामाहुः कुर्वन्तीति ओदनपाकं पचतीतिवद्व्याख्येयम् । तदेवं

शब्दकर्तृकं प्रवर्तनारूपेष्टसाधनत्वाभिधानमेव शब्दभावनेति गीयते। तस्याः पुरुषप्रवृत्त्यर्थं प्रवृत्तेः पुरुषप्रवृत्तिर्हि स्वर्गादिस्थानीया भाव्या समीहितसाधनताविज्ञानन्तु परार्थप्रवृत्तशब्दव्यापारजन्य-तया यागादिवत्करणं प्राशस्त्यज्ञानन्त्वितिकर्तव्यतेति विवेक्तव्यम्। प्रवर्तनेति समीहितसाधनतैवोच्यते तदुद्देशेन हि कृतिः प्रवर्ततइति दर्शितम्। एवं च प्रवर्तनावचनः कर्तव्यतावचनः प्रत्यय इत्यादिग्र-न्थस्याविरोधः । न च सहप्रयोगविरोधः प्रवृत्तिनिमित्तभेदात् पर्यायत्वाभावात्। इष्टसाधनशब्दो हि तत्साधनतामेव साक्षादभि-धत्ते लिङादयस्तु प्रवर्तनारूपेण कृत्यर्हतारूपेण वेति नास्ति पर्या-यता । तदिदं कर्तव्यतारूपं प्रवर्तनारूपं वा समीहितसाधनत्वमेव लिङादिभिरभिधीयतइत्येतावदेव रमणीयम् । स्वव्यापाराभिधानं दुरुपपादं ग्रन्थानुगुण्यमपि नातीव दृश्यते। तथा हि निषेधशास्त्रेषु प्रतिषेधस्य वर्जनस्य नञाभिधेयस्य लिङादिभिर्विधेर्वा प्रतिषेध इति वचनव्यक्तिद्वयमङ्गीकृत्य ब्राह्मणं न हन्यादित्यत्र पुंस्त्वाविवक्षां प्रतिपादयता प्रतिषेधविधावविवक्षामुपपाद्य विधिप्रतिषेधे ऽप्य-विवक्षामुपपादयतोक्तं विध्यर्थमपि द्वेषाद्यर्थप्राप्तमनूदितं हननं प्रतिषिध्य चरितार्थो नञ् न लिङ्गमपरं शक्नोति प्रतिषेद्धुमिति। यदि हि स्वव्यापारो विध्यर्थः स्यान्न तस्यानुवादो ऽवकल्पते न हि द्वेषादिनिमित्तायां हननादिप्रवृत्तौ लिङ्व्यापारः प्रवर्तकः प्राप्तः यो न हन्यादित्यादिषु लिङा ऽनूद्य नञा प्रतिषिद्ध्येत । ननु कर्तव्यता ऽप्यनभिधेया कथमनूद्यते अननूदिता वा कथं निषि-द्ध्यते । ननु भवन्मते समीहितसाधनता हननस्य विद्यतएवेति कथं निषिध्यते । उच्यते प्रवर्तना हि विध्यर्थः कर्तव्यता च महान्तमनर्थं जनयत्सु हननादिषु यदपि स्वल्पसुखसाधनत्वं तेन प्रवर्तना कर्तव्यता वा न हि तादृशे प्रेक्षापूर्वकारिणां कृतिः प्रवर्तते। ये तु महान्तमनर्थं न जानन्ति ते स्वल्पसुखसाधनत्वादेव

भ्रान्त्या कर्तव्यतां मन्यन्ते सा शक्यते प्रतिषेद्धुम् । या भ्रान्त्या हननस्य कर्तव्यता ऽवगता सा नास्तीति तस्मादनवद्यम् ॥

न्यायागमानुसारेण श्रीमद्यज्ञात्मसूनुना ।
पार्थसारथिमिश्रेण कृतो ऽयं विधिनिर्णयः ॥ ३ ॥

यत्र विप्रतिपद्यन्ते सम्बन्धे लिङ्गलिङ्गिनोः ।
स्वरूपतः प्रमाणाच्च तत्र निर्णय उच्यते ॥ १ ॥

स्वरूपतस्तावत्कार्यकारणभावसंयोगसमवायैकार्थसमवायविरोधाल्लैङ्गिकशब्दनिर्दिष्टानुमानकारणत्वेन काणादाः सङ्गिरन्ते। अस्येदं कारणं कार्यसंबन्ध्येकार्थसमवायि विरोधि चेति लैङ्गिकमिति। अविनाभावं साधनस्य साध्यतदभावाभ्यामन्वयव्यतिरेकस्वरूपं तत्स्वभावतदुत्पत्तिनिबन्धनं शाक्या मन्यन्ते। साध्येन साधनस्य व्याप्तिमन्ये। नियमरूपं मीमांसकाः। प्रमाणतो विप्रतिपत्तिः। तत्स्वभावतदुत्पत्ती शाक्याः प्रमाणमाहुः। मानसप्रत्यक्षमन्ये। ऐन्द्रियकमेवान्ये। तदपि प्राथमिकमेवेति केचित्। अपरे भूयोदर्शनसहायं चरमं प्रत्यक्षं नियमप्रमाणं मन्यन्ते। अर्थापत्तिमन्ये। भूयांस्येव तद्दर्शनानि व्यभिचारादर्शनसहायान्याचार्याः। तत्र वैशेषिकपरिगृहीतकार्यकारणभावादिमात्राभ्युपगमे कृत्तिकारोहिण्युदयादीनां गम्यगमकभावो न स्यात्। कार्यकारणभावाद्यभावात्। न च संबन्धिग्रहणेन सर्वसंग्रहः। तस्य संयोगसमवायमात्रपरत्वात्। सर्वपरत्वे च कार्यकारणभावादीनामपि तत एव सिद्धेः पृथगभिधानानर्थक्यम्। अपि चैवं वह्नेरपि धूमानुमानं स्यात्कार्यकारणत्वात्। वृक्षत्वेन शिंशपात्वस्यैकार्थसमवायात्। अथानियतत्वान्नायं प्रसङ्गः तर्हि नियम एवानुमानाङ्गं न कार्यकारणभावादि। शाक्यपक्षेऽपि स्वभावकार्ययोरेवान्वयलाभेन हेतुत्वान्न कृत्तिकोदयादचिरोदितरोहिणीप्रतिपत्तिः सिद्ध्येत्। रसाच्च रूपानुमानं प्रवृत्तिसामर्थ्यरूपोपादानसहकारिरसोपादानं रसादनुमीयते प्रवृत्तिसामर्थ्याच्च रूपोपादानादुपादेयरूपानुमानमिति चेन्न। अकार्यत्वात्। यद्यपि कार्यात्कारणं सहकारिसहितमनुमीयते कारणात्तु प्रवृ-

त्तिसामर्थ्यादपि न कार्यं शक्यमनुमातुम् अकार्यत्वादतत्स्वभावत्वाच्च। अथ कारणमप्यनुमापकं वह्नेरपि धूमानुमानप्रसङ्गः इत्युक्तम् । अपि चान्वयो नामानुगतिः न च धूममूर्ध्वं गच्छन्तं भूमिष्ठो वह्निरनुगच्छति। शङ्कुच्छायां वा रविर्दिविष्ठो भूमिष्ठाम्। एतेन व्याप्तिः प्रत्युक्ता । न हि

भूमिप्रतिष्ठितो वह्निर्धूमाग्रं व्योम्न्यवस्थितम् ।
व्याप्नोति नियमस्तस्मात् संबन्धो लिङ्गलिङ्गिनोः ॥२॥

यथोक्तम् ॥

"नियमो नाम सम्बन्धः स्वमतेनोच्यते ऽधुने"ति ।
यो यथा नियतो येन यादृशेन यथाविधः ।
स तथा तादृशस्यैव तादृशो ऽन्यत्र बोधकः ॥३॥

यो भावो येन यादृशेन यावद्देशकालवर्तिना यथा येन प्रकारेण संयोगसमवायैकार्थसमवायकार्यकारणभावादिना केनापि संबन्धेन साक्षात्परम्परया वा नियतत्वेन दृष्टान्तधर्मिष्ववधारितः स तादृशो धर्म्यन्तरेषूपलभ्यमानस्तादृशं तद्देशकालवर्तिनं तथाविधसम्बन्धसम्बन्धिनमनुमापयति । तद्यथा । धूमो नभोवृत्तिरूर्ध्वं गच्छन्नातिदूरवर्तिना वह्निना नियतस्तथैव तं गमयति । नदीपूरस्त्वधुनातनो ऽधोदेशगतश्चातिदूरवर्तिनीं वृत्तां वृष्टिम् । उदयस्तु चन्द्रगतः समुद्रगतां तत्कालां वृद्धिम्। तस्यैव नभोमध्यस्थितिस्तामेवार्धपञ्चदशनाडिकातिक्रान्ताम्। तादृश्यैव तया तस्या नियतत्वात् । एवमन्यत्राप्यूहनीयम् । नियम एव वार्तिके व्याप्तिशब्देनोच्यते ॥

संबन्धो व्याप्तिरिष्टा ऽत्र लिङ्गधर्मस्य लिङ्गिना ।
व्याप्यस्य गमकत्वञ्च व्यापकं गम्यमिष्यते ॥

इत्यादिषु। केन पुनः प्रमाणेनायं नियमो ऽवगम्यते कार्यकारणभावाद्वा स्वभावाद्वेति केचित्। तदयुक्तम्। अकार्यकारणातदाकारात्मनां कृत्तिकारोहिण्युदयादीनां नियमाभावप्रसङ्गात्। अपि च। पौर्वापर्यनियम एव कार्यकारणभावः कथं च नियम एव नियमे प्रमाणम् आत्माश्रयदोषापत्तेः। अपि च कार्यस्वभावयोरेव किं प्रमाणं प्रत्यक्षेण तावत्साहित्यमात्रं गम्यते न तत्कार्यता तत्स्वभावता वा। शतशो ऽग्नौ धूमदर्शनादनग्नौ चादर्शनात् तत्कार्यता धूमस्यावसीयतइति चेन्न। स खलु यत्र दृश्यते तत्र तस्यास्तिता यत्र न दृश्यते तत्र नास्तित्वं गम्यते। कार्यता तु कुतः। तस्मात्कार्यकारणभावस्यैवाप्रमाणकत्वान्न तन्निबन्धनं नियमावधारणमवकल्पते। तत्स्वभावता चाप्रामाणिक्येव। शिंशपा हि वृक्षात्मिका क्वचिद्दृष्टा ऽपि न तत्स्वाभाव्येन नियन्तुं शक्यते तन्मात्रानुबन्धित्वात्तत्स्वभावतायाः। न च शिंशपामात्रानुबन्धि वृक्षत्वमिति किञ्चित्प्रमाणमस्ति। सत्यपि सहोपलम्भे वृक्षत्वस्य व्यभिचारसंभवात्। न शिंशपात्वस्य क्वचिद् व्यभिचारो दृष्ट इति चेत्तथा ऽपि देशान्तरे कालान्तरे वा व्यभिचारसंभवात्सन्देहानिवृत्तिः। तन्न स्वभावतो नियमसिद्धिः। केचित्तु मानसप्रत्यक्षं नियममाचक्षते। तदयुक्तं मनसो बहिरस्वातन्त्र्यात्। भूयोदर्शनसहायं बहिः प्रवर्त्स्यतीति चेन्न। देहाबहिर्भावात्। न खल्वक्षजत्वमात्रं प्रत्यक्षलक्षणम् अनुमानादेरपि लिङ्गादिसहितमनोजन्यतया प्रत्यक्षता मा भूद् इन्द्रियार्थसंप्रयोगजं प्रत्यक्षं चतुर्विधश्च संप्रयोगः संयोगाद्द्रव्यग्रहणं संयुक्तसमवायाद् गुणकर्मसामान्यानाम्। संयुक्तसमवेतसमवायाद् गुणत्वादीनाम्। तत्समवायाद् गुणत्वादिगतसत्ताग्रहणम्। न चायं चतुर्विधो ऽपि बाह्येन सह मनसः संभवति संप्रयोगः तस्य देहाबहिर्भावात्।

ये ऽपि विभु मनः संगिरन्ते तेषां यद्यपि मनो द्रव्यमाकाशवद् व्यापकं तथा ऽपि कर्णच्छिद्रपरिच्छिन्नस्येव गगनस्य देहावच्छिन्नस्यैवेन्द्रियभावमातिष्ठन्ते मनसः अतो ऽसंभवी बाह्येन संप्रयोगः । अन्यथा ऽनुमानादीनामपि मनःसंयुक्तार्थविषयत्वात्प्रत्यक्षत्वप्रसङ्गः । यदि चतुर्विध एव संप्रयोगः कथं तर्हि शब्दग्रहणं न हि श्रोत्रस्याकाशदिगहंकाराणामन्यतमात्मकस्य शब्दस्य च निष्क्रियतया तयोः संभवति संयोगः तस्य कर्मजत्वात् । उच्यते । संयोग एवानयोः सन्निकर्षः । न चायं कर्मजन्यः संयोगजसंयोगे व्यभिचारात् । नापि संयोगजन्यः कर्मजे व्यभिचारात् । तदुभयानुगतं नैरन्तर्यमेव द्रव्यगतमस्य कारणम् । तच्च विभुनोरपि संभवति । भवतु वा संयोगजसंयोगस्याप्रमाणकत्वाज्जनिमतः संयोगस्य कर्मजत्वमव्यभिचारात् । तन्तुगत एव हि तुरीसंयोगस्तन्तौ पटभावमापन्ने पटगतो ऽपि भवति न तु संयोगान्तरबुद्धिस्तत्रास्ति तर्ह्यजः संयोगो विभुनोर्भविष्यत्यनुमानात् । विभुनी मिथः संयुक्ते द्रव्यत्वे सति निरन्तरत्वात् घटाकाशवदिति । यदि तु नैरन्तर्यमेव संयोगस्तथा ऽपि विभुनो ऽपि युक्तः[१] संयोगः । ननु द्रव्यधर्मः संयोगः स कथं गुणभूतस्य शब्दस्य स्यात् नायं गुणो द्रव्याश्रयत्वे प्रमाणाभावात् । ननु न कार्यमनाश्रितं संभवति सत्यं न तु शब्दस्य कार्यत्वं नित्यत्वात् । कश्चित्त्वेकेन्द्रियग्राह्यतया रूपादिवच्छब्दं गुणमिच्छति । तस्यापि वायावनैकान्तिकत्वम् । स्पर्शविरहे सतीति विशेषणे ऽपि गोत्वरूपत्वादिसामान्यैर्व्यभिचारः । तेषां नेत्रैकगोचराणामपि गुणत्वाभावात् । अपि च यच्छब्दाश्रयत्वेनाभिमतं व्योम तत्प्रत्यक्षमप्रत्यक्षं वा स्यात् । प्रत्यक्षत्वे तेनैव लोचनैकगोचरेण द्रव्यभूतेन हेतोर्व्यभिचारः । अप्रत्यक्षत्वे सति

---

१ भविष्यतः इत्युभय पु०पाठः ।

तस्य सप्रतिसाधनत्वम्। न ह्यप्रत्यक्षगुणत्वं प्रत्यक्षस्य शब्दस्य संभवति शक्यतएव हि प्रयोक्तुं शब्दो न गुणः प्रत्यक्षद्रव्यगुणत्वरहितत्वे सति प्रत्यक्षत्वात् घटवदिति। तस्माद्युक्तमस्य द्रव्यत्वे संयोगाद् ग्रहणमिति चतुर्विध एव सन्निकर्ष इति बाह्येन मनसः सन्निकर्षाभावात् न मानसप्रत्यक्षविषयत्वं नियमस्य धूमादिवर्तिनः संभवति। तत्र प्रमाणान्तरमिदं भूयोदर्शनसहायमनोजन्यं लिङ्गादिसहितमनोजन्यज्ञानादिवत्प्रसज्येत। तच्चानिष्टं प्रमाणषट्काभिधायिनाम्। कश्चित्तु बहिरिन्द्रियविषयमेव नियममिच्छति। स हि मन्यते वन्हिधूमयोः सम्बन्धो देशकालानवच्छिन्न एव प्रत्यक्षेणावगम्यतइति। ननु सन्निहितदेशकालविषयत्वात्प्रत्यक्षस्य तदवच्छिन्न एव संयोगः। नैवम्। इदन्ता हि सन्निहितदेशकालावच्छेदः स च द्रव्ययोरेवावगम्यते न संयोगस्य संयुक्ताविति हि प्रतीतिः न पुनरयमनयोः संयोग इति तस्माद्देशकालाभ्यां संयोगो न च द्रव्यमेवावच्छिद्यते न तु संयोगस्य देशकालाववच्छेदकौ। तेनानवच्छिन्नः संबन्धो धूममात्रानुयायीति निश्चीयते ततश्च धूमसत्त्वैव देशकालान्तरादौ प्रमाणमपेक्षते। न त्वग्निसंयोगस्तस्य पूर्वमेवावगतत्वात्। अग्नेस्तु धूमसंयुक्तस्यापि दृष्टस्य क्व चिद्व्यभिचारदर्शनादार्द्रेन्धनाद्युपाधिकृतो ऽस्य धूमसंयोगो न स्वाभाविकः धूमस्य तु तादृशोपाध्यदर्शनात् स्वाभाविकमग्निसंबन्धित्वं नियतं भवति। न हि स्वाभाविकं व्यभिचरतीति। अत्र वदामः संविदेवात्र तावत्परिपन्थिनी। सा हि देशकालाभ्यां संयोगमेवावच्छिन्दती जायते संयुक्तावेतौ वह्निधूमौ संयुज्येते संयोक्ष्येते इति संयोगस्यैव भावार्थस्य कालत्रयावच्छेदात्। सो ऽयं स्वप्रयुक्त एव बाणो भवन्तं प्रहरति कारकव्यापारो हि कालत्रयावच्छेद्यो न कारकमिति। न चावश्यमिदंशब्देनैव कालो निर्देष्टव्यः। लडा-

दिभिः सुतरां निर्देशासिद्धेः। यदि च स्वतन्त्रस्यैव द्रव्यस्य कालसंयोगो न परतन्त्राणां गुणकर्मणाम् ततो लडादीनां कालविशेषे स्मृतानां निर्विषयत्वं स्याद् । ते हि क्रियाया एव कालावच्छेदमुपदर्शयन्ति न द्रव्यस्य । सा चेदनवच्छेद्या कस्यैते कालसम्बन्धमभिदधीरन् । मा भूद् देशकालाभ्यामवच्छेदावगमः संयोगस्य तथा ऽपि स्वाभाविकत्वमप्रमाणमेव । न ह्यवच्छेदानवगम[1]मात्रेण तदभावावधारणं सिद्ध्यति सतो ऽप्यनवगतिसंभवाद् । अनिश्चिते चावच्छेदाभावे न स्वाभाविकत्वं सिद्ध्यति । सिद्धौ वा वर्तमानकालता ऽपि स्वाभाविकी धूमस्य स्याद् । यथा ह्यग्निसंयोगो द्रव्यविशेषणमेवं कालो ऽपि ततश्चाग्निसंयोगवत्स्वाभाविकमेतत्कालसम्बन्धित्वमित्यापद्येत । तत्र यथा ऽग्निसंयोगरहितस्य नावस्थानमेवमेतत्कालसम्बन्धितामपहाय धूमस्य स्थित्यभावाद् प्रत्यक्षेणैव कालान्तरसम्बन्धव्युदासात्क्षणिकता भावस्यापादितेति जितं सौगतैः । अथानवच्छिन्नो ऽपि कालसम्बन्धो न स्वाभाविकस्तथा ऽग्निसंयोगो ऽपि स्याद् । अथ स्वाभाविकमपि कालसम्बन्धमपहाय धूमस्तिष्ठेत् अग्निसंयोगमप्यपहाय सम्भवत्यवस्थानमिति न नियमावधारणम् । ननु प्रत्यभिज्ञया कालान्तरसम्बन्धावगमाद् पूर्वकालप्रहाणेनापि सिद्ध्यति धूमस्यावस्थानम् । अग्निसंयोगन्त्वपहाय न कदा चिद्धूमो दृश्यतइति कथमसौ तमन्तरेण स्याद् । किमिदानीं प्रत्यक्षगृहीतैव क्षणिकता पश्चात्प्रत्यभिज्ञया बाध्यते । न ह्येवमभ्युपगमो भवताम् । पपि चैवमस्तु नाम प्रत्यक्षावगतकालान्तरसम्बन्धस्य पूर्वावगतक्षणिकत्वबाधः अनुमानेन तु कथमग्नेः प्रत्यक्षावगतक्षणिकभावस्य तद्बाधेन कालान्तरसम्बन्धी ऽवगम्यते । अपि चैवं प्रत्यक्षावगततत्तत्कालसम्बन्धनियमविरुद्धस्यासन्तानवगतस्य कालान्तरसम्बन्धस्य अनुमानेन ग्रहणे गृ-

[1] वगतीति· १ पु· पा

हीतग्राहित्वमनुमानस्य दूरापास्तं स्यात् । अपि चानवच्छिन्नस्यापि कालसम्बन्धस्य व्यभिचारदर्शनादग्निसंयोगो ऽपि व्यभिचरेन्न वेति सन्दिहाना न सहस्रेणापि पुरुषायुषैस्तदन्तं प्रतिलभेरन् । यद्यपि दृश्यमानेषु देशकालादिषु प्रयत्नेनान्विष्टो व्यभिचारो न दृष्टस्तथा ऽपि क्व चित्कदा चित्संभवति व्यभिचार इति शङ्कां को नाम निवारयेत् । न च प्रत्यक्षं तन्निवारणे शक्तम् । तस्य सन्निहितदेशकालमात्रव्यापारात् । नानुमानं तस्य नियमावधारणाधीनत्वात् । तदधीने तु नियमे परस्पराश्रयदोषापत्तेः । स्वाभाविकत्वादव्यभिचार इति चेन्न । स्वाभाविकत्वे एव प्रमाणाभावात् । अनौपाधिकत्वमेव स्वाभाविकत्वं न चोपाध्यनवगतिमात्रेण तदभावसिद्धिरित्युक्तम् । अपि च स्वाभाविकं न व्यभिचरतीत्यत्र किं प्रमाणम् । न तावत्प्रत्यक्षं नानुमानं नान्यत्किञ्चित् । दृष्टश्चानौपाधिकस्यापि कालसंबन्धस्य व्यभिचारस्तथा ऽग्निसम्बन्धस्यापि स्यात् । अपि चान्ययोरेवाग्निधूमयोर्दृष्टान्तधर्मिणि सम्बन्धो ऽवगतः अन्यश्चायं पर्वतवर्ती धूमः तस्याग्निसम्बन्धो ऽनवगत इति कथं लिङ्गं स्यात् । अथ सामान्यं लिङ्गं न तस्य संबन्धानवगमात् । देशकालाभ्यां सम्बन्धेन जात्या च सर्वैर्द्रव्यमेव विशेष्यते न तु सम्बन्धस्य जातेश्च परस्परान्वयः जातेरपि संयोगवद्द्रव्यविशेषणत्वात् । अथ द्रव्यद्वारेणास्ति जात्योरपि सम्बन्धः तथा ऽप्यार्द्रेन्धनाद्युपाधिरिवाग्नेर्धूमसम्बन्धस्तदभावे कालान्तरे तद्द्रव्याभावे तद्द्वारकः सम्बन्धो ऽपि न स्यात् । द्रव्यान्तरद्वारस्तु कालान्तरसम्बन्धः प्रागनवगत इति कथमनुमानाङ्गम् । न च विशेषपरिहारेण सामान्ययोः सकृद्दर्शनेन शक्यावगमः सम्बन्धः । किञ्च देशकालाभ्यामपि द्रव्यद्वारेण संयोगस्याप्यवच्छेद इति नानवच्छिन्नत्वम् । यथा च जात्योर्द्रव्यद्वारकः सम्बन्धः स्वाभाविको भवत्येवमग्नि-

सम्बन्धस्य तत्कालावच्छेदो द्रव्यद्वारको ऽपि स्वाभाविकः स्यादिति तत्कालप्रहाणेन न कालान्तरे सम्बन्धस्तिष्ठेदित्यसम्बन्ध एव कालान्तरे ऽग्निधूमयोर्भवदुक्तया नीत्या निश्चेतव्यः स्यात् न तु कालान्तरे ऽग्निसम्बन्धशङ्का ऽपि धूमस्य स्यादित्यलमतिनिर्बन्धेन । अपरं मतम् शतशो ऽग्नौ धूमदर्शनादनग्नौ चादर्शनान्नियतो ऽयमग्निनेति प्रतीतिस्तावदुपजायते तिरश्चामपि । न चेयमप्रमाणं सर्वदा सर्वेषां संवादित्वेन जायमानत्वात् । अतः प्रमाणमेवेदम् । तच्च षड्विधान्तर्भूतम् । तत्र नेदमनुमानं सम्भवति तस्य नियमावधारणाधीनत्वात् । न च शाब्दमशब्दजन्यत्वात् । नोपमानमसादृश्यविषयत्वात् । नार्थापत्तिर्नियममन्तरेणानवकल्पमानस्य कस्य चिददर्शनात् । अभावस्तु भावरूपे नियमे दूरापास्त एव । नन्वयं विपक्षव्यावृत्तिरूपो ऽभाव एव न व्यावृत्तिमात्रं नियमः शशविषाणादेः सर्वविपक्षव्यावृत्तस्य सर्वार्थनियमप्रसङ्गात् । व्यावृत्तिरपि सर्वविपक्षेभ्यो दुर्लभैव दृश्यादर्शनाभावात् । पारिशेष्यात्प्रत्यक्षमेवेदम् । न च प्रथमदर्शने ऽनवगमादप्रत्यक्षम् । रत्नतत्त्वस्येव भूयःपरिचयसचिवप्रत्यक्षविषयत्वोपपत्तेः । ननु वर्तमानविषयं प्रत्यक्षं तत्कथमनेन देशकालान्तरसंबन्धात्मा नियमः शक्यावगमः । उच्यते न कालान्तरादिसम्बन्धो नियमः किन्तु स्वरूपं धूमादीनाम् । तच्च वर्तमानमिति युक्तं प्रत्यक्षग्राह्यत्वम् । न हि नियमं ग्रहीतुं देशान्तरादिसम्बन्धो ग्रहीतव्यः कुड्यादीनामिव स्थिरं रूपम् । न हि तेषां कालान्तरसंबन्धो ऽप्रत्यक्ष इति तद्रूपमप्रत्यक्षं भवति । तथा सति नेदं रजतमिति पूर्वज्ञानबाधकत्वमुत्तरकाले न स्यात् विषयभेदात् । पूर्वकाले हि रजतज्ञानेन रजतं प्रसञ्जितम् । उत्तरकाले च तदभाव इति विषयभेदात् कथं बाधकत्वम् । अतः स्थिरमेव रजतरूपं गृहीतमिति वक्तव्यम् आह च

"रजतं गृह्यमाणं हि चिरस्थायीति गम्यते" इति ।

तद्वन्नियमरूपं गृह्यतइति युक्तं प्रत्यक्षत्वम् । कीदृशं पुनरिदं रूपं धूमादीनां नियतो ऽयमग्निनेति नियमः यदा यत्र धूमस्तदा तत्राग्निरित्यर्थः । तस्मादुपपन्नं प्रत्यक्षविषयो नियम इति । तत्रेदं वक्तव्यम् । किं प्रत्यक्षं सर्वं विद्यमानोपलम्भनम् आहो स्विदविद्यमानोपलम्भनमपीति । न तावदविद्यमानोपलम्भनं प्रत्यक्षं नाम संभवति । तत्संप्रयोगजनितत्वेन विद्यमानोपलम्भनत्वस्य स्थितत्वात् । तथा च नियमविषयत्वासम्भवः । तस्य सर्वदेशकालव्यापिरूपत्वात् । अयमेव हि धूमस्याग्निना नियमः यदखिलधूमदेशकालव्यापित्वमग्नेः । यथोक्तम् ॥

"यो यस्य देशकालाभ्यां समो न्यूनो ऽपि वा भवेत् ।
स व्याप्यो व्यापकस्तस्य समो वा ऽप्यधिको ऽपि वे "ति॥

यत्तु धूमस्वरूपनियम इत्युक्तम् अस्त्वेतत् स्वरूपमपि तदग्निसम्बन्धाव्यभिचारात्मकमेव । कश्चासावव्यभिचारः अन्यदतो यावद्धूमदेशकालमग्निसम्बन्धसंभवात् । तथा च तस्मिन् प्रत्यक्षीक्रियमाणे देशान्तरादिसंबन्धः प्रत्यक्ष आपद्येत । तत्सम्बन्धातिरिक्तन्तु पाण्डुरत्वादिवद्धूमगतं नियमाभिधानमपरोक्षं रूपमीक्षतइति संविद्विरुद्धम् । यदि चेदं रूपान्तरं पाण्डुरत्वादिवत्संबन्धातिरिक्तं स्यात् तस्मिन् प्रत्यक्षगृहीते ऽपि सर्वधूमदेशकालव्यापित्वमग्नेर्गृहीतं न स्यात् । न ह्यन्यस्मिन् गृहीते ऽन्यद्गृहीतं भवति अतिप्रसङ्गात् । अगृहीते च देशकालाव्यभिचारे कथमनुमानोदयः । किञ्चेदं रूपान्तरमपि प्रत्यक्षेण गृह्यमाणं सन्निहितदेशकालावच्छिन्नमेव गृह्यतइति न कालान्तरेण नियमः सिध्येत् । यदपि दर्शितम् कुड्यादीनामिव स्थितं रूपमिति तदपि निरूपणीयम् । किन्तत्र स्थायित्वमेव

गृह्यतइत्यभिप्रायः किं वा यद्वस्तुतः स्थास्नुरूपं तद्गृह्यतइति किं वा स्थितियोग्यता । न तावत्पूर्वः कल्पः स्थायिता ह्यनेककालावस्थानं सा कथं प्रत्यक्षेणैव गृह्यते तस्य वर्तमानविषयत्वात् । यदि चेदं प्रत्यक्षेणैव गृह्यते ततः स्थायिताप्रसिद्धये प्रत्यभिज्ञादरो निरर्थकः स्यात् । द्वितीये तु कल्पे कुड्यरूपमेव तत् नान्यत् एवमिहापि यद्वस्तुतो नियतं धूमस्वरूपमेव तत्प्रत्यक्षमित्येव सिद्ध्येत् । न च तावता किंचित्प्रयोजनमस्ति योग्यता तु सर्वभावानामर्थापत्तिगम्येति प्रत्यक्षगम्यताऽनुपपत्तिः। यस्तु घटकुड्यादिषु दृष्टमात्रेषु स्थायित्वावगमो लौकिकानां स तादृशां स्थायित्वस्य पूर्वमेवानुगमादानुमानिकः । स्पष्टं चास्यानुमानिकत्वमुक्तरूपत्वात् । तथा हि ईदृशीयमवगतिः यदि शस्त्रादिना नैतद्भिद्यते ततः कियन्तं चित् कालं स्थास्यतीति । एवं रजतादिष्वप्यानुमानिकमेव तद्रूपस्य स्थायित्वम् । अनेनैवाभिप्रायेणोक्तम् ।

रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते ।

एतदेव बाधकस्यापि तत्त्वम् । अनुमानेन ह्येतदवगतं रजतस्य सतो नाकस्मादतद्भावः संभवतीति अतद्रूपस्य वा तद्रूपतेति उभयोरपि कालयोरेकरूपमेवेदमिति स्थिते पूर्वमेवावगतं रजतरूपमुत्तरकालं व्याप्नोति उत्तरकालावगतश्चातद्भावः तत्पूर्वकालम् । तेन समानविषयतया पूर्वावगतस्य रजतरूपस्य भवत्युत्तरकालभुवा नेदं रजतमित्यनेन बाधः । यत्र त्वनुमानेनैकरूपत्वं न कालद्वये ऽपि वस्तुनो ऽवगतं तत्र न भवत्येव बाधः। यथा बदरफले श्यामप्रत्ययस्य पाककालभुवा रक्तप्रत्ययेन । प्रत्यक्षेण तु स्थायित्वावगमे तत्रापि बाधः स्यात् । तस्मान्न प्रत्यक्षेण स्थायित्वं स्वध्यवसानम् । एवं नियमो ऽपि सर्वदेशकालव्याप्तिरूपत्वान्न । ननु स्वाभाविकत्वं संबन्धस्य नियमः न

तु कालान्तरसम्बन्धस्तच्च वर्तमानमेवेति युक्तं यत्प्रत्यक्षेण गृह्यते। किं पुनरिदं स्वाभाविकत्वं न तावत्सदातनत्वं कादाचित्कस्य तदयोगात् । अथ स्वरूपनिमित्तत्वम् अग्नेरपि धूमसंवन्धे स्वरूपं निमित्तमिति तस्यापि धूमसंवन्धो नियतः स्यात् । नन्वार्द्रेन्धनादिकृतो ऽस्य धूमसम्बन्धो न स्वरूपनिमित्तः सत्यम् आर्द्रेन्धनादिनिमित्तं स्वरूपमपि निमित्तमेव । न ह्यसति संवन्धिस्वरूपे सम्बन्धो भवति । स्वरूपधर्मत्वमिति चेत् स एव दोषः । अग्निस्वरूपस्यापि धर्म एव संयोगः। अथ स्वरूपैकानिमित्तकः सम्बन्धः स्वाभाविकः वह्नेस्तु धूमसंवन्धे स्वरूपातिरिक्तो ऽप्यार्द्रेन्धनादिरस्त्येव हेतुः धूमस्य वह्निसम्बन्धे स्वरूपमेव निमित्तम् न निमित्तान्तरमस्तीति मतमेवन्तर्हि प्रत्यक्षगम्यं स्वाभाविकत्वं न हि तेन निमित्तान्तराभावः शक्यते प्रत्येतुं भावविषयत्वात्प्रत्यक्षस्य । दृश्यादर्शनात्तु निमित्तान्तराभावः प्रतीयतइति प्रत्यक्षगम्यत्वानुपपत्तिः । अपि च धूमस्याग्निसम्बन्धे न स्वरूपमेव निमित्तमग्न्यादीनामपि निमित्तत्वात्। तस्मात्स्वरूपाव्यभिचार एव स्वाभाविकत्वम् । अव्यभिचारश्च सकलतद्देशकालव्याप्तिरिति प्रत्यक्षगम्यत्वानुपपत्तिः तस्य वर्तमानविषयत्वात् । अपि च स्वाभाविकता ऽपि वर्तमानस्यैव संनिहितस्य निश्चेतुं शक्यते नातीतानागतव्यवहितविप्रकृष्टानां संवन्धानाम् । सन्ति हि बह्वयो वह्निधूमसम्बन्धस्य व्यक्तयः कथं तासां सर्वासां धूमस्वरूपमेव निमित्तमिति संयुक्तविषयेण प्रत्यक्षेण गम्यते । अथ सम्बन्धसामान्यस्य तन्निमित्तत्वम् न तस्य नित्यत्वेन निमित्ताभावात्। इदश्च सकृद्दर्शनगम्यनियमपक्षे ऽपि तुल्यमेव दूषणम् । तत्रापि हि संप्रयुक्तस्यैव हि संयोगस्य धूमा[1]भावनिमित्तता ऽवगम्यते नातीतादीनाम् । स च काला-

[1] धूमस्वरूपनिमित्ततेति प्र. पु. पाठः ।

न्तरे नष्ट इति प्रत्यक्षावगतस्य संयोगस्य रूपनिमित्तेन कालान्तरे ऽनुमानम् । तस्मान्न कथञ्चित् प्रत्यक्षविषयत्वं नियमस्येति स्थितम् । अपरे त्वर्थापत्तिगम्यं नियमं मन्यन्ते । यदेतच्छतशो ऽग्नौ धूमदर्शनमनग्नौ च क्वचिदप्यदर्शनमिदमसति धूमस्याग्निना नियमे ऽनुपपन्नम् । अनियतो हि कदाचित्क्वचिदप्यग्निं विनोपलभ्येतेति । तदप्यनुपपन्नम् । अदर्शनं तावदभावादेवोपपन्नम् । न तु तावता सर्वत्रानग्नौ नास्तीति शक्यमध्यवसातुं प्रमाणाभावात् । दर्शनमात्रमपि तत्र भावादेवोपपन्नम् । न तु तावन्मात्रेण सर्वत्राग्नावस्त्येव धूम इति स्वध्यवसानम् । तस्माद्वक्तव्यं नियमे प्रमाणम् । उच्यते किमत्र वक्तव्यम् यतः ।

स्वयं वार्तिकारेण प्रमाणमुपदर्शितम् ।
भूयोदर्शनगम्या हि व्याप्तिरित्यभिधानतः ॥ ४ ॥

अनृजवो हि पूर्वमार्गा महान्तं क्लेशमाश्रित्यानुभवानारूढा वैयात्यमात्रेणागतिकागतिन्यायेनाश्रिताः । नियतो धूमो ऽयं नूनमग्निनेत्यूहरूपस्य ज्ञानस्य संविद्भिरुद्धप्रत्यक्षत्वाश्रयणादस्ति चायमृजुमार्गो भूयोदर्शनगम्यो नियम इति । किं पुनरिदं भूयोदर्शनं नाम प्रमाणम् । नैकं किंचिन्नियमस्य वक्तुं शक्यते किन्तु येनैव प्रत्यक्षादीनामन्यतमेन लिङ्गस्य भूयःसाहित्यं लिङ्गिना गम्यते तदेव विपक्षादर्शनसहायं नियमप्रमाणं संभवतीति । ननु भूयोभिर्दर्शनैस्तत्र तत्र साहित्यं गम्यते न तु सर्वत्र दर्शनानां सर्वेषां स्वविषयपर्यवसानात् अनन्तप्रत्यक्षगम्यो हि सर्वत्र सहभावः स जीवद्भिर्दुर्लभः । विपक्षादर्शनादपि प्रत्यासन्नेष्वेव विपक्षेषु परमभावो गम्यते सर्वविपक्षव्यावृत्तिस्तु दुर्लभैव दृश्यादर्शनाभावात् । अदर्शनमात्रेण चाभावासिद्धेः । तत्कथं नियमस्य सर्वदेशकालव्याप्तिरूपस्य भूयोदर्शनगम्यत्वम् । एतच्च स्वयमेवाचार्येण शङ्कितम् यदाह ।

"अन्वयो हि प्रतिव्याप्यं व्यापकस्य न दृश्यते ।
अनन्तेन हि लभ्येत स प्रत्यक्षादिजन्मने"ति ॥

तथा—

"नाभावेन विपक्षाद्धि हेतुभावः प्रतीयत"इति च ।
सर्वविपक्षाभावो न लभ्यतइत्यर्थः अत्र च समर्थनमुक्तम्

"तत्रास्यादृष्टिमात्रेण गमकः सहचारिण इति" तत्रेति विपक्ष-इत्यर्थः । एतदुक्तं भवति । मा नाम सर्वविपक्षाभावो लिङ्गस्य सैत्सीत् अदर्शनन्तु विपक्षेषु लिङ्गस्यास्त्येव तावता च सहचारी दृष्टो धूमादिः सहचारिणो ऽग्न्यादेर्गमको भवति । यत्तु सह-चारित्वमपि सर्वत्र दुर्लभं द्रष्टुमित्युक्तं तत्राप्युत्तरमुक्तम् ।

"दुर्लभं सहचारित्वं सर्वत्रेति यदुच्यते ।
द्रष्टुं न नाम सर्वत्र द्वित्रयोर्दृश्यते ध्रुवम् ॥
साहित्ये मितदेशत्वात्प्रसिद्धे वह्निधूमयोः ।
व्यतिरेकस्य वा ऽदृष्टेर्गमकत्वं प्रकल्पत"इति ॥

अयमर्थः मा नाम सर्वत्र सहचारित्वं दर्शि द्वित्रयोस्तु प्रदेशयोरीषत्करं दर्शनम् । तावता त्वसति व्यभिचारदर्शने भवत्यनुमानम् । यदि हि सकलदेशकालव्याप्तिरूपो नियमो ऽनुमानाङ्गमस्माभिरुपगम्येत ततः स्यादुपालम्भः । न त्वेवम-स्माभिरुच्यते किन्तु यत्र यत्र धूमादिकम् दृष्टं तत्र तत्र सर्वत्र नियमेनाग्न्यादिसाहित्यमनग्नौ चादर्शनमित्येतावदेवानुमानोदये कारणमेतावदेव हि लौकिकानां धूमो ऽग्निं गमयति । न तु सकलपक्षविपक्षान्वयव्यतिरेकावगतिमपेक्षते येन दुर्लभं प्र-माणं स्यात् । तेन न सकलदेशकालापेक्षया नियमाभिधानमपि तर्हि दृश्यमानेषु देशकालेषु यो लिङ्गस्य लिङ्गिसाहित्यनियमः स एव नियम इत्युच्यते । तस्मात्तन्मात्रमेवानुमानाङ्गम् । तच्च भूयोभि-रेव दर्शनैः सुगममिति नाप्रमाणं लिङ्गिसाहित्यनियमः । यथा ऽऽह

सहत्वदृष्टिमात्रेण गमकः सहचारिण इति ।

कियद्भिः पुनः साहित्यदर्शनैरनुमानम् । को नामैतत्संचष्टे यावद्भिर्दृश्यते तावद्भिरेव न तु संख्याय वक्तुं शक्यते । ये ऽपि भूयोदर्शनसहायमध्यक्षगम्यं नियममाहुः ये ऽपि सकृद्दर्शने ऽपि गृहीते नियमे उपाध्याशङ्कानिराकरणार्थमर्थयन्ते भूयोदर्शनं ते ऽपि नैवं संचक्षते तथा वयमपीति न तद्विशेषः । किमिदानीं सकलधूमदेशकालव्यापित्वमग्नेर्नावगन्तव्यमनुमित्सता । सत्यम् नावगन्तव्यम् । नन्वेवं सामान्यतो ऽप्यज्ञातसम्बन्धः पक्षैकदेशी कथमिव ज्ञातसम्बन्धपदेनाभिधीयते । नानेन पक्षैकदेशिनो ऽभिधानमपि तु दृष्टान्तैकदेशिनः । तदयं भाष्यार्थः । अन्यस्मिन्नेव महानसाद्येकदेशिनि धूमाग्न्येकदेशाभ्यां ज्ञातसम्बन्धे सति तदेकदेशं धूममन्यत्र पर्वतादौ तस्मिन्नेव वा महानसे कालान्तरे दृष्ट्वा ऽग्निरनुमीयते लोके तथा दर्शनात् । तथा च ज्ञातसम्बन्धपदेन ज्ञातुं निर्देश इत्युक्त्वा अथ वा न प्रमातुः किन्तु प्रमेयस्य कस्य चिन्निर्देशो न ज्ञातुरित्यर्थः । कस्य प्रमेयस्यैकदेशिन इत्यपेक्षायां दृष्टान्तैकदेशिन इत्युक्तम् । यथाहुः

एकदेश्येकदेशाभ्यां कश्चिच्चेज्ज्ञातसंगतिः ।
तत्तुल्यो ऽन्यः स वा ताभ्यां विभागेनानुमीयते इति ॥

स वा ताभ्यामिति कालान्तराभिप्रायम् । एवञ्च वदन् ज्ञातसम्बन्धपदेनैकदेश्यन्यपदार्थपक्षे दृष्टान्तैकदेशिनो ऽभिधानमित्याह । भवतु नामैवं यथा दृष्टप्रदेशेषु साहित्यनियमादेवानुमानम् । यस्त्वयं यत्र यत्र धूमस्तत्र तत्राग्निरिति भूयोदर्शनतो ऽवगमः स कथम् । न ह्यसौ नास्ति न चाप्रमाणं सर्वदा सर्वेषां दृढत्वेन जायमानत्वात् । तदयं कस्मिंश्चित्प्रमाणे ऽन्तर्भवतीति वक्तव्यम् । उच्यते आनुमानिको ऽयमवगमो ज्ञातसम्बन्धस्योपजायमानत्वात् । परोक्षरूपत्वाच्च नैन्द्रियकः साक्षात्का-

रित्वाभावात् संविद्विरोधाच्च । धूमस्य हि बहुषु देशकालेष्व-ग्निना साहित्यमुपलब्धवतो भवत्यनुमानम् । अन्ये ऽप्यतीता-नागतविप्रकृष्टाः सर्वएव धूमवन्तो ऽग्निमन्तो धूमवत्त्वात् परि-दृष्टमहानसादिवदिति । तेन यथालोकं प्रमाणसामग्र्यनुसर-णाद्धर्म्यन्तरगतसाहित्यनियमादेव धर्म्यन्तरे ऽनुमानमित्यनवद्य-म् । आह च

"तेन धर्म्यन्तरेष्वेषा यस्य येनैव यादृशी ।
देशे यावति काले वा व्याप्यता प्राङ्निरूपिता ॥
तस्य तावति तादृक् स्याद् दृष्टधर्म्यन्तरे पुनः ।
व्याप्यांशो व्यापकांशस्य तथैव प्रतिपादक" इति ॥

यादृशतादृशशब्दाभ्यां दृष्टान्तपरिदृष्टरूपान्न्यूनरूपस्य न लिङ्गत्वं नापि लिङ्गित्वमिति दर्शितम् । न हि विना धूमत्वं पाण्डुर-वत्त्वमात्रेण कपोतादिभ्यो ऽग्निमनुमिमते लौकिकाः । नाप्यु-ष्णवह्निनियतस्तृणविकारो हिमे दृष्टः प्रत्यक्षावगतशैत्यविरो-धादौष्ण्यबाधे सति अनुष्णमेव वह्निमनुमापयति । यथालोकं च प्रमाणगतिः परीक्षकैरनुसरणीया न तद्विरोधेन । तदनेन सर्वेषामप्रयोजकहेतूनामाभासत्वं दर्शितम् । दृष्टान्तपरिदृष्टरूपा-न्न्यूनरूपो हेतुरप्रयोजक इत्युच्यते । पक्षसपक्षसम्बन्धभेदमात्र-न्तु सोढव्यम् । सर्वानुमानेषु तथा दर्शनात् । तदतिरिक्तन्तु रूपमविकलमेवाङ्गीकर्तव्यम् । तेन निषिद्धत्वसहितस्य हिंसा-त्वस्याधर्मत्वेन साहित्यमुपलब्धं ब्राह्मणहननादिष्विति विना ऽपि निषिद्धत्वेन हिंसात्वमात्रान्नाग्नीषोमीयहिंसायामधर्मत्वम-नुमातुं शक्यम् । निषिद्धत्वस्य विना ऽपि हिंसात्वेन गुर्वङ्ग-नागमनादावधर्मत्वसाहित्यं दृष्टमिति तदनुमापकम् । यथा ऽध्ययनादिकार्यवतः शिष्यस्यासकृदुपाध्यायसाहित्यमवगतमि-ति न शिष्यमात्रेणाध्यापकानुमानम् । तथा देवदत्ततनयानां

श्यामत्वसाहित्यं गर्भपरिणामसमयोपयुक्ताशितपीतादिविशेषनि-
मित्तमिति तदभावे देवदत्ततनयत्वमात्रेण न तत्तनयान्तरस्य
श्यामत्वानुमानम्। एतेन संनिवेशविशिष्टतया तनुतरुमहीरुहादीनां
घटादिवदुपलब्धिमत्कर्तृकत्वानुमानं प्रत्युक्तम्। तथा हि येषु हस्ता-
दिव्यापारविशेषेण संनिवेशाः शक्यन्ते रचयितुं तेषामेव घटपट-
गृहादीनामुपलब्धिमत्कर्तृकत्वं तदभावे पारिणामिकानामङ्गदे-
हादीनां सन्निवेशविशेषमात्रेण कथं तदनुमानं पाण्डुरमात्रादिव
वह्न्यनुमानम्। तथा शरीरेन्द्रियादियुक्तबुद्धिमत्कर्तृकत्वेन साहि-
त्यं संनिवेशविशिष्टानामुपलब्धं तच्च दृश्यादर्शनाद्दूर्वाङ्कुरादिषु
निषिद्धम्। तस्मिन्निषिद्धे बुद्धिमन्मात्रं शरीरादिरहितं नानुमातुं
शक्यम् तृणादिविकारादिव हिमे उष्णवह्न्यनुमानम्। न चैवं सर्वा-
नुमानोच्छेदप्रसङ्गः सर्वविशेषपरिहाणेन धूमत्वसामान्यस्य व-
ह्नित्वसामान्येन साहित्यमवगतं पर्वते च तदविकलमेव दृष्टमिति
युक्तं तत्र तदनुमानम्। सामान्यमेवानुमीयते न विशेषः अनुगत्य-
भावात्। अवगतमपि महानसादौ सामान्यं देशान्तरकालान्तरादौ
प्रत्यक्षेणेवानुमानेन प्रत्यभिज्ञायमानं भवति प्रमेयमिति न सिद्धसा-
ध्यता। सामान्यस्यापि चास्त्येव संयुक्तसमवायसम्बन्धः पर्वतेने-
ति युक्तं तत्र तस्यानुमानम्। ननु देशविशेषादपि पदार्थस्वरूपम-
न्यथा भवति क्वचिद्धि वृश्चिकदंशादपि मरणं भवति क्वचिन्न
तथा धूमस्यापि देशान्तरेऽग्निव्यभिचारशङ्का भवेत्। सत्यमे-
षा भवति सा तु तत्तद्देशादागतेभ्यः श्रुत्वा शक्यते निरसितु-
मिति सर्वमवदातम्। तेन यस्य यादृशस्य सामान्यस्य विशेषस्य
वा येन यादृशेन सामान्येन विशेषेण वा यथादृष्टेषु देशकालेषु
साहित्यं येन केनापि सम्बन्धेन नियतमुपलब्धं तदेव तादृशमेव
देशान्तरकालान्तरादौ दृष्टं तस्य तादृशस्य साहित्यनियमादेव
बोधकं भवति दृष्टप्रदेशेषु भूयोभिरेव दर्शनैर्व्यभिचारादर्शनमा-

त्रसहायैः साहित्यनियमः शक्यावगम इति सिद्धम् । नियमरूप एव लिङ्गस्य लिङ्गिना संबन्धः स च भूयोदर्शनप्रमाणक इति ।

पार्थसारथिमिश्रेण वार्तिकोक्तानुसारतः ।
यथाप्रतीति निर्णीतो नियमः सप्रमाणकः ॥ ५ ॥

इति पार्थसारथिमिश्रविरचितायां न्यायरत्नमालायां
व्याप्तिवादः समाप्तः ॥

तथा ऽपि कथं क्रत्वर्थत्वम् उच्यते । व्रीहीणां तण्डुलपिष्टपुरोडाशादियागप्रणालिकया ऽपूर्वसाधनत्वम् । तथाविधांश्चोद्दिश्य विधीयमानं प्रोक्षणं सर्वस्य द्वारद्वारिभावावास्थितस्याङ्गं भवति कथं चोपादानेन क्रत्वर्थत्वं प्रोक्षणादेः यदि मतं नियोगैदमर्थ्यं तावद् ग्राहकग्रहणेनैव प्रोक्षणादेरवगतं तच्च करणतया न संभवति पारिशेष्यात्करणोपकारकत्वेनैव तादर्थ्यं निर्वहतीति नियोग एव तदन्वितः प्रतिपन्नस्तस्य करणोपकारकतां कल्पयन्करणैदमर्थ्यमाक्षिपतीति । यद्येवं प्रकरणमेवेदमभिधानान्तरेणोक्तम् । तस्यापि ह्येतदेव रूपं भवत्पक्षे प्रयाजादीनां ग्राहकग्रहणापादितापूर्वैदमर्थ्यनिर्वाहार्थं करणतदसंभवात्करणोपकारद्वारकल्पनमिति उपकारस्वरूपमेव प्राकरणिकम् । तज्जनकत्वं तु प्रयाजादीनामप्यौपादानिकमेवेति चेत् । तर्हि प्रयाजादेर्विनियोगः प्राकरणिकः स्यात् । न हि प्रकरणकल्पितोपकारजननमात्रेण प्रकरणविनियोगः सिध्यति । सर्वेषामेव सन्निपातिनामनारभ्याधीतानां चाङ्गानां तज्जनकत्वेन प्रकरणविनियोगप्रसङ्गात् । अतः प्राकरणिकमेव प्रोक्षणादेरङ्गत्वम् । नन्वसंयुक्तं प्रकरणेन विनियुज्यते संयुक्तं च प्रोक्षणमिति । नैष दोषः । संयुक्तानामपि द्वारापेक्षत्वात् तन्निबन्धनत्वाच्च करणोपकारद्वारपरिकल्पनस्य प्रयाजादिष्विव । तदेवं प्रमाणशरीराविशेषे ऽपि संयुक्तानां द्वारपरिकल्पकमुपादानम् । असंयुक्तानां च प्रकरणमिति समयमात्रम् । पश्वेकत्वादीनामपि श्रुत्यैव विनियोगो ज्योतिष्टोमादीनामपि फलार्थत्वं वाक्यादिभिरिति प्रागेव चर्चितम् । तस्मादुक्तान्येवाङ्गत्वे प्रमाणानीति ॥

इति न्यायरत्नमालायामङ्गनिर्णये द्वितीयः परिच्छेदः ।

एवं श्रुत्यादिभिरुपनीतेंशत्रये ऽनुष्ठानयोग्या भावना संजाता विधीयते। अनुष्ठाप्यतइत्यर्थः । अनुष्ठापकत्वमेव हि विधेः स्वरूपम् । अवगते च फले तत एवानुष्ठानसिद्धेर्नार्थो विधिनेति चेत् । न साधनत्वावगतिमात्रेण प्रवृत्त्यसंभवात् । साधनत्वमात्रं हि यागस्य फलं प्रत्यवगम्यते तत्किं दैवनिर्म्मितस्यैव निदाघसमयवर्त्तिमध्यंदिनतपनातपनिपातसंतप्ततनोरिव मेघपुष्पगर्भमेघसंघस्य संतापस्योत्सादकत्वं कर्म्मणः फलजनकत्वम् उतान्यकृतस्य प्रपादिवद्भोजनादिवद्वा स्वयं कृतस्येति विशेषानवगमान्न प्रपादिवद्भोजनादिवद्वा स्वयं कृतस्येति विशेषानवगमान्न प्रवर्त्तेत। विधिस्तु प्रवर्त्तकस्वभावात्कर्त्तुरेवेदं फलं साधयतीति कल्पयतीति भवत्यनुष्ठापकः । विशिष्टानुष्ठानं च विशेषणानुष्ठानमन्तरेणानुपपन्नमिति विशेषणेष्वप्यनुष्ठापको ऽर्थाद्भवति । तत्र केषां केन प्रकारेणानुष्ठापको भवतीत्येतच्चतुर्थे चिन्त्यते । तत्र फलांशे तावत्पुरुषस्य स्वयमेव प्रवृत्तत्वान्न विधिरनुष्ठापको भवति । कथं तर्हि लक्ष्यमाणत्वमुभयोरिति साध्यांशस्यापि साधनांशवच्चोदनालक्षणत्वमुच्यते। नैष दोषः । चोदनाप्रमेयं हि तल्लक्षणम्। तत्र ज्योतिष्टोमादेः प्रमाणान्तरगम्यमानस्यापि यथा फलसाधकत्वं विधिप्रमाणकमिति तल्लक्षणत्वम्। एवं फलस्यापि तत्साध्यत्वमन्यतो ऽनवगतमिति विधेरेवावगम्यतइति भवति तदपि तल्लक्षणम् । न चैतावता विधेयत्वं न ह्यज्ञातज्ञापनं विधिः। येन तद्विषयतया फलस्य विधेयत्वं स्यात् किन्त्वप्रवृत्तप्रवर्त्तनं तेन यत्र पूर्वमप्रवृत्तः पुरुषो विधिवशात्प्रवर्त्तते तद्विधेयं फले च पूर्वमेव प्रवृत्तिर्मानसी संजाता ज्योतिष्टोमसाध्यत्वावगमे ऽपि तत्र तावत्येव प्रवृत्तिः । न हि कायवचनचेष्टाः फलमवगाहन्ते । साधनत्वे तु तत्त्वतो ज्ञाते सति पूर्वमप्रवृत्त एव प्रवर्त्तते । तस्मात्तद्विधेयं न फलमिति । एवमङ्गानामपि दध्यानयनादीनामा-

भिक्षाद्यर्थमेवानुष्ठापनं न वाजिनाद्यर्थतया। प्रतिपत्त्यर्थं च प्रतिपाद्यं द्रव्यं नानुष्ठापयति न हि शेषार्थं शेष्यनुष्ठानं शेष्यर्थं तु शेषानुष्ठानम् । शेषिणो ऽपि यत्रान्यसाधनस्यैवान्यत्र विनियोगः यथा पुरोडाशकपालस्य तुषोपवापे तत्रापि परप्रयुक्तस्यैव साधनत्वान्न स्वयं प्रयोजकत्वम् । किमर्थं तर्हि प्रयाजशेषाभिघारणस्य प्रतिपत्तित्वप्रतिपादनं शेषस्यापि प्रयाजशेषस्य तत्प्रयुक्तस्यैव विनियोगान्नाभिघारणेन प्रयुक्तिसंभवः। सत्यं शेषत्वे ऽपि प्रयाजशेषस्य न द्रव्यप्रयोजकत्वमभिघारणस्य तु प्रयोजकं स्यात् ततश्च वाजपेये प्राजापत्यवपाभिघारणार्थं प्रयाजशेषं धारयितुं पात्रान्तरमुत्पाद्यं स्यात् तन्निवृत्त्यर्थं प्रयाजशेषस्य प्रतिपाद्यत्वं संपाद्यते । ननु प्रतिपत्तिरपि धारणं प्रयुङ्क्त एवान्यथा वैगुण्यप्रसङ्गात् तस्य चान्याय्यत्वात् । अत एव सत्रे साधारणपात्रोत्पादनं तद्ध्येवमर्थम् यदि कस्य चिद्यजमानस्य पात्रैः प्रयोगः प्रारभ्यते ततः कदा चित्तेषु प्रयुक्तेषु तस्य यजमानस्य प्रमादसंभवे पात्राणां परिधानीये कर्म्मणि विहिता प्रतिपत्तिर्लुप्येत ततश्च वैगुण्यं स्यादिति । यदि प्रतिपत्तिर्न धारणस्य प्रयोजिका ततः प्रतिपत्तिलोपमनादृत्य कस्य चिदेकस्य पात्रैः प्रयोगः स्यात् । तस्मादनर्थकं प्रयाजशेषस्य प्रतिपाद्यत्वाभिधानमिति । सत्यमुक्तं श्रुतवता किं त्वत्र प्रयाजशेषस्य क्रतुपशुवपाभिघारणेन प्रतिपत्तिः सिद्धेति न धारणमर्थवत् । हविषां तु प्राधान्ये प्राजापत्यवपानामवैगुण्यार्थं धारणं भवेदिति युक्तमेव प्रतिपत्तित्वाभिधानम् । यदि प्रयोजकाप्रयोजकत्वचिन्ता चतुर्थे कथं तर्हि क्रत्वर्थपुरुषार्थत्वयज्ञाङ्गत्वायज्ञाङ्गत्वापूर्वसदसद्भावनियमविधिव्युत्पादनफलविध्यर्थवादत्वफलवत्त्वकालार्थाङ्गप्रधानार्थत्वसमप्रधानत्वगुणप्रधानत्वादीनि चिन्त्यन्ते प्रयोजकाप्रयोजकत्वसिद्ध्यर्थमेव तत् । तथा हि । क्रत्व-

र्थत्वे गोदोहनादेः क्रतुविधिप्रयोज्यत्वं नान्यथा। तथैकत्वादेर्यज्ञार्थत्वे तत्प्रयुक्तम्। स्विष्टकृत्सपूर्वसद्भावे सागांशस्यापूर्वं प्रयोजकम्। एवं तर्हि हविर्विनाशे ऽपि हविरन्तरमुत्पाद्यादृष्टसिद्ध्यर्थं स्विष्टकृद्यागः कर्त्तव्यः स्यात्। नैतदेवम्। यद्यप्यपूर्वं यागस्य प्रयोजकं यागस्तु न द्रव्यस्य प्रयोजकः। एकदेशद्रव्यत्वात् तस्माददोषः। एवमर्थे समवैषम्यम् इत्यतः पूर्वं शेषशेषित्वविचारेण प्रयोजकाप्रयोजकत्वं निरूपितम्। अत एवोक्तम्। अतिक्रान्तस्तृतीयविषय इति ततस्साक्षादेव लक्षणार्थनिरूपणम्। सोमलिप्तानां तु प्रतिपाद्यत्वं कृष्णविषाणाप्रसङ्गेनोक्तम्। तथा कर्तृदेशकालगुणद्रव्यसंस्काराणां दृष्टार्थानामर्थप्राप्तत्वान्न विधानं संभवति देशान्तरादिनिवृत्त्यर्थत्वे ऽपि परिसंख्या स्यात्। न चान्यो विधिप्रकारः संभवति तस्मादनुवाद इत्याशङ्क्यास्त्यन्यो विधिप्रकारः नियमो नाम यत्पाक्षि[1]कप्राप्तांशपरिपूरणमिति यावत्। तस्माद्विधिरिति। यदिदं नियमविधिव्युत्पादनं तदापि दर्शपूर्णमासादिविधीनां नियमेन समादिप्रयोजकत्वसिद्ध्यर्थम्। तथा अपापश्लोकश्रवणादीनामर्थवादत्वे पर्णमयीत्वादीनां क्रतुविधिप्रयुक्तिः न फलविधित्वे। विश्वजिदादीनामफलत्वे प्रयोजकत्वमेव विधेर्दुर्लभं फलवत्त्वे तु तद्भवति। ततः फलगतविशेषानुसंधानं प्रागङ्गप्रयोजनसंबन्धविचारात् तथा ऽग्निं चित्वा सौत्रामण्या यजेतेत्यादीनामङ्गप्रयोजनसंबन्धपरत्वे ऽग्निविधिप्रयुक्तिः सौत्रामण्यादीनाम्। कालार्थत्वे दर्शपूर्णमासयोः सोमप्रयोजकत्वं च न भवति। तथा जातेष्टेः शेषिविरोधेन निमित्तानन्तर्यबाधमभिधाय शौचकालप्रयोजकत्वमुक्तम्। तदुपोद्घातत्वेन च पुत्रगामिफलप्रतिपादनं पुत्रफलत्वे हि शेषिविरोधः शक्यते वक्तुं न पितृफलत्व इति ततो ऽङ्गभूतानामपि सौत्रामण्यां

[1] यत्पाक्षिकप्राप्तस्य नियतत्वकरणमप्राप्तांश इत्यधिकः पाठो २ पु० दृश्यते।

स्वकालप्रयोजकत्वमुक्तं तथा ऽनुमत्यादीनां विदेवनादीनां च सम-प्राधान्ये सर्वेषां फलमेव प्रयोजकं स्यात् । गुणप्रधानभावे त्वनियो-ज्यानां क्रतुप्रयुक्तत्वमिति । ननु प्रधानेषु विधिरेव प्रयोजको न फलं तत्कथं प्रधानेषु फलं प्रयोजकमङ्गेषु विधिरिति बालिश्यमेकदे-शिवदाचर्यते । नैवास्माभिः प्रधानेषु विधेरप्रयोजकत्वमुच्यते किं तर्हि प्रयुक्तिविशेषचिन्ता क्रियतइति । यथा चातुर्मास्य-प्रयोगविधिर्दध्यानयनप्रयोजको ऽपि किमामिक्षार्थं प्रयुङ्क्ते उत वाजिनार्थमपीति विचार्यते । यदर्थं च प्रयुङ्क्ते तत्प्रयोजकमि-त्युच्यते । आमिक्षा प्रयोजिका न वाजिनमिति तथा ऽत्रापि किं विदेवनादीनां फलं प्रयोजकमुत क्रतुरित्यस्यायमेवार्थः किं फलसिद्ध्यर्थं प्रयुज्यन्ते उत क्रतूपकारसिद्ध्यर्थमिति । एवमुत्त-रत्रापि विदेवनादीनां शेषविचारेण प्रयुक्तिविशेषचिन्तैव क्रि-यते । तथा दधिग्रहस्य नित्यत्वान्नित्यवज्ज्योतिष्टोमादिप्रयुक्तिः वैश्वानरादेस्तु नैमित्तिकत्वान्न नित्यवत्प्रयुक्तिः पितृयज्ञस्यानङ्ग-त्वान्न दर्शपूर्णमासप्रयुक्तिः । तथा स्वरुरशनयोः पशुयूपप्रयुक्त-त्वम् । सांग्रहणीदर्शपूर्णमासज्योतिष्टोमविचारा राजसूयवद्द्रष्टव्या इति । एवं प्रयोजकाप्रयोजकत्वे चिन्तिते सत्येकप्रयोगविधिवि-धेयानां बहूनामङ्गप्रधानानामेककर्तृकाणामवश्यंभाविनि क्रमे सति तद्विशेषः पञ्चमे चिन्त्यते । नन्वयमनारम्भणीय एव क्रम-विचारः क्रमस्याविधेयत्वेनानङ्गत्वात् । अनङ्गलोपे च प्रधान-स्यावैगुण्यात् । कथं पुनः क्रमस्याविधेयत्वम् । तदुच्यते ।

स्वरूपेणाविधेयः सन् विधेयस्याविशेषणम् ।
अभिधाविधुरत्वेन ग्राहकेणावधीरितः ॥ १ ॥
विध्यङ्गभावविधुरो विध्याक्षेपबहिष्कृतः ।
क्रमः केन प्रकारेण वैधानीयकमृच्छति ॥ २ ॥

न तावत् क्रमः स्वरूपेण विधातुं शक्यते । अननुष्ठेयत्वात् न हि स्वतन्त्रः क्रमोऽनुष्ठातुं शक्यते । द्रव्यादिवदिति चेत् । न अतद्विशेषणत्वात् । अथापि स्यात् यथा द्रव्यादीनां स्वतोऽननुष्ठेयानामप्यनुष्ठेयभावार्थविशेषणतया विधिगोचरत्वम् एवं क्रमस्यापि भविष्यतीति । तन्न । अविधेयविशेषणत्वात् । द्रव्यादयो हि विधेयभूतभावार्थविशेषणभूता युक्तं यद्विधीयन्तइति क्रमस्तु न तथा संघातविशेषणत्वात् तस्य चाविधेयत्वात् । न हि संघातो विधीयते पदार्थास्तु विधीयन्ते न च ते क्रमस्य भूमयः । न ह्येकैकत्र क्रमः संभवति तस्मादविधेय इति । संख्यावदिति चेत् नोपलक्षणत्वात् । तत्रैतत्स्यात् एकादश प्रयाजान्यजतीति यथा संघातवर्त्तिन्यपि संख्या विधीयते तद्वत्क्रमोऽपीति । तन्न उपलक्षणत्वात्संख्यायाः । न हि तत्रैकादशसंख्या विधीयते संख्योपलक्षितास्त्वभ्यासा विधीयन्ते ते च क्रियात्मका एवेति युक्तमेव विधीयन्तइति तस्मात्सर्व एव तार्त्तीयः पाञ्चमिकश्च क्रमो न विधेय इति विवरणकारः । निबन्धकारस्त्वाह भवतु तार्तीयक्रमस्य संख्यायाश्चैकादशादिकाया अभिधानसंभवाद् ग्रहणेन विध्यैदमर्थ्ये सति विध्याक्षिप्तानुष्ठानतया विधेयत्वं न त्वेवं पाञ्चमिकस्य क्रमस्य संभवति । न हि तस्य किंचिदभिधानमस्ति अनभिहितं च न ग्राहको ग्रहीतुमीष्टे । साधिकारस्य विधेः प्रयोजनरूपस्य सन्निधिसमाम्नातैः स्वयमप्रयोजनभूतैः प्रयोजनप्रयोजनिभावेनान्विताभिधानं ग्राहकग्रहणमभिधीयते यश्च नाभिधीयते न तस्यैवंरूपं ग्राहकग्रहणं संभवति तदगृहीतस्य च न विध्यैदमर्थ्ये प्रमाणमस्ति तादर्थ्यशून्यस्य च न विधिरनुष्ठानमाक्षिपति अतदाक्षिप्तानुष्ठानस्य च न विधेयत्वसंभवः । यथाऽऽहुः । यत्तु तत्सिद्ध्यर्थमुपादीयते तद्विधेयमिति । कथं पुनः क्रमस्याभिधानं नास्ति क्त्वाप्रत्ययो हि पूर्वकालताम-

भिधत्ते अध्वर्युर्गृहपतिं दीक्षयित्वेति । न क्त्वाप्रत्ययः पूर्वकालताभिधायी मुखं व्यादाय स्वपितीत्यादिषु व्यभिचारात्समानकर्तृकत्वमेवाव्यभिचारात् क्त्वार्थः । कथन्तर्हि भुक्त्वेति पूर्वकालताऽवगतिः। उच्यते क्त्वाप्रत्ययो हि समानकर्तृकार्थवाचिनोर्द्धात्वोर्य एव पूर्वं प्रयुज्यते तत एव विधीयते ततश्च क्त्वाश्रवणात्पूर्वप्रयोज्यत्वावगमे सति यथाप्रयोगमर्थावगमो यथाऽवगमं चानुष्ठानमित्यनुष्ठानक्रमः प्रतीयते न तु पूर्वकालत्वाभिधानात् स्याच्च तावच्छ्रुतिक्रमे ऽभिधानशङ्का अर्थादिषु तु दूरापास्तैव सा । तस्मादनभिधेयत्वेन क्रमस्यानङ्गत्वात्तद्धानावपि वैगुण्याभावादनर्थकः क्रमविचार इति । तत्राहुः ।

> "क्रमस्यानङ्गभावे ऽपि नैवानादरणीयता ।
> तदभावे विशिष्टस्य प्रयोगस्याप्रसिद्धितः" ॥

सत्यमनङ्गमेव क्रमः तथा ऽपि नानारम्भणीयः क्रमविचारः। अनङ्गस्यापि तस्यादरणीयत्वात् । श्रुत्याद्यवगतक्रमविशेषसमालिङ्गितप्रयोगविशेषसाध्यो हि प्रयोगविधिरवसीयते तेन यद्यपि प्रयोगविधिः क्रमस्यानुष्ठानं नाक्षिपति प्रयोगविशेषं त्वाक्षिपत्येव स च नर्त्ते क्रमविशेषात्सिध्यतीति तदादरः तेनारभ्यं क्रमलक्षणमिति ।

इदन्तु नानुमन्यन्ते युक्तिग्रन्थविरोधतः ।
अननुष्ठेयरूपो ऽपि तद्विशेषणभावतः ॥ ३ ॥
विधेयत्वं कथंकारं क्रमो न प्रतिपद्यते ।
अभिधाविधुरो ऽप्येष कथं चिद्बुद्धिमागतः ॥ ४ ॥
आकाङ्क्षायोग्यतायुक्तः पितृयज्ञादिकर्त्तृवत् ।
ग्राहकग्रहणं गच्छेत्तद्व्यन्यत्रापि कारणम् ॥ ५ ॥

वदेत्स्मृतिप्रयोगाभ्यां क्त्वाश्रुतिः पूर्वकालताम् ।
प्रयोगनियमाभावात्प्रतिपत्तिश्च नान्यथा ॥ ६ ॥
श्रुतिलक्षणमित्येतद्विधत्ते क्रममित्यपि ।
न सूत्रं न च भाष्यं स्यात्तस्मादेतददर्शनम् ॥ ७ ॥

यत्तावत्स्वरूपेण क्रमो न विधेय इति तदनुमन्यामहे विधेयरूपप्रयोगविशेषणत्वेन तु विधेयत्वं निवारयितुं न शक्यते कालादिवत् । यथा हि कालः प्रयोगानुबन्धितया विधीयते तद्वत्क्रमो ऽपि । यत्तु संघातविशेषणत्वान्न विधेयविशेषणमिति। तदनुपपन्नम् । पदार्थविशेषणत्वात् । न हि संघातः क्रमस्य भाजनमवगम्यते न हि भवति क्रमेण संघात इति। भवति तु पदार्थाः क्रमेणानुष्ठीयन्तइति यत्त्वेकैकत्र नावगम्यतइति । नैष दोषः। संयोगवत्सद्वितीयपदार्थाश्रयत्वात् तथा ऽवगमात् । यद्वा नायं सद्वितीयपदार्थाश्रयः । एकैकत्र तु समातयोगिको दीर्घत्वादिवद्वर्त्तते । पौर्वापर्यं हि क्रमः न द्वयोः पूर्वत्वं नापि परत्वम् । एकापेक्षया त्वितरस्य पूर्वत्वं तदपेक्षया चेतरस्य परत्वमवगम्यते । तस्मात्सर्वथा न संघाताश्रयः किं तु पदार्थाश्रयः पदार्थाश्रयत्वे च तद्विधिनैव दध्यादिवद्विधीयतइति। यत्त्वनभिहितत्वान्नास्य ग्राहकग्रहणं भवतीति । तदप्ययुक्तम् । किमत्राभिधानेन आकाङ्क्षासंनिधियोग्यत्वानि ह्यन्विताभिधानोपलक्षणं नाभिधानं मा विलोपि विश्वजिदादौ नियोज्यान्विताभिधानम् । आकाङ्क्षितश्च प्रयोगविधेर्नानापदार्थानेकस्मिन् कर्त्तरि निक्षिपतः क्रमविशेषः सन्निधापितश्चासौ श्रुत्यादिभिर्योग्यश्चेति किमर्थमनेनान्वितं स्वार्थमभिधातुं प्रधानवाक्यगतो लिङ्शब्दः कापुरुषवदभिधानमुत्कोचमपेक्षते । यस्यापि चान्याभिधानमस्ति प्रयाजादेस्तदापि न स्वशब्देन प्रधानापूर्वान्वितमभिधीयते किं तु

प्रधानवाक्यगत एव लिङ्गशब्दस्तदन्वितं स्वार्थमभिधत्ते स्वशब्दस्तु तत्सन्निधापनमात्रेऽपियोगीति ते दर्शनं सन्निधापनं च विना ऽप्यभिधानेन क्रमस्यापि विद्यतएवेति भवत्यसौ ग्राहकग्रहणगोचरः । तद्यथा पितृयज्ञे विश्वजिति चानभिहितस्यापि कर्त्तुरङ्गत्वम् एवं क्रमस्यापि भविष्यति । अव्यापकश्चायं हेतुरनभिहित इति । अध्वर्युर्गृहपतिं दीक्षयित्वेत्यत्रमादौ क्त्वाप्रत्ययेन पूर्वकालस्याभिहितत्वात् । यत्तु व्यभिचारित्वान्न पूर्वकालत्वमर्थ इति । तन्न । न व्यभिचारादशब्दार्थत्वं भवतीति । मा भूत् ज्वलनवचनस्याग्निशब्दस्य माणवके ऽपि प्रयोगादतदर्थत्वम् । मा च भूत् यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यतइत्यादिषु भिन्नकर्तृके ऽपि प्रयोगादलंखल्वोपपदाद्धात्वर्थमात्रे ऽपि प्रयोगात्समानकर्तृकत्वमप्यतदर्थः । स्यान्मतं न व्यभिचारादशब्दार्थत्वं ब्रूमः किं त्वनन्यलभ्यः शब्दार्थ इति स्थितिः । समानकर्तृकत्वं च तथा । न हि तस्यानभिहितस्यान्यतः कुतश्चिदवगतिः संभवति पूर्वकालत्वप्रतिपत्तिस्तु प्रयोगनियमादप्युपपद्यते समानकर्तृकार्थवाचिनो हि पूर्वं प्रयुज्यमानाद्धातोः क्त्वाप्रत्ययो लोके प्रयुज्यते तस्मात्पूर्वकालप्रतिपत्तेरन्यथा ऽपि सिद्धत्वान्न शब्दार्थत्वमिति । नैतद्युक्तम् । प्रयोगनियमाभावात् । भवति हि गच्छति भुक्त्वेत्यपि लोके प्रयोगः श्रुतिस्मृतीतिहासादिषु चानेकशो हृदयमाच्छिन्दत् जातवेदो मरुतो ऽद्भिस्तमयित्वा प्राणायामं चरेत्स्नात्वा न्यवर्त्तत मृगं हत्वेत्यादीनि बहून्युदाहरणानि । तस्मान्न प्रयोगनियम इत्यनन्यलभ्यत्वात्पूर्वकालत्वं क्त्वाऽभिधेयमिति सिद्धमव्यापकत्वं हेतोः । सूत्रकारश्च श्रुतिलक्षणमानुपूर्व्यमिति स्पष्टमेव विधेयत्वं दर्शयति । भाष्यकारो ऽपि दीक्षाक्रमं विधत्ते स क्रमो विधीयतइत्यादिभिस्तत्र तत्र क्रमस्य विधेयत्वमाघोषयति । तस्मान्न्यायतो ग्रन्थतश्च क्रमस्याविधेयत्वं

न घटते ग्राहकग्रहणापादितविधेयैदमर्थ्यस्य लिङ्गाच्च प्रतिलब्ध-प्रयोगावच्छेदद्वारस्योपादानपरिकल्पितकरणोपकारसाधनत्वस्य संख्यावत्क्रमस्य न किं चिदनङ्गत्वे कारणमस्ति यदविधेय इत्युच्यते । किं च ।

चोदनालक्षणत्वं च क्रमस्य कथमीदृशः ।
स्वरूपं हि न तद्गम्यं साध्यसाधनते न च ॥ ८ ॥
न लिङ्गमात्रं संख्यावल्लिङ्गिना ऽनवधारणात् ।
तथा सत्यपि लिङ्गं चेद् द्रव्याद्यपि तथा भवेत् ॥ ९ ॥

कथं चेदृगनूदितस्याविधेयस्य क्रमस्य चोदनालक्षणत्वम् । न हि तस्य स्वरूपं चोदनागम्यम् अपूर्ववत् प्रमाणान्तरगम्यत्वात् । नापि दध्यादिवदपूर्वसाधनत्वम् । अनभ्युपगमात् । नापि साध्यत्वमधिकारवदस्य चोदना बोधयतीति न तल्लक्षणत्वम् । अतल्लक्षणं च न विचारमर्हतीत्यनारम्भणीयं क्रमलक्षणं स्यात् । तत्रैतत्स्यात् यथा सप्तदश प्राजापत्यान्पशूनालभतइत्यत्राविधेया ऽपि संख्या विधेयभूतकर्म्मोपलक्षणत्वेन चोदनार्थतां नातिवर्त्तते तथा क्रमो ऽपि प्रयोगविधिविधेयप्रयोगविशेषोपलक्षणत्वेन चोदनालक्षणः स्यादिति । नैतत्सारं लक्ष्यानवधारणात्संख्या हि स्वसमवाययोग्यानि पृथक्कर्म्माण्युपस्थापयन्ती भवत्युपलक्षणं क्रमस्तु न कथं चित्प्रयोगविशेषमुपस्थापयति । न ह्येतेषु कर्म्मसु कृतेषु द्वयं संख्या संपद्यतइतिवदस्मिन्प्रयोगे ऽनुष्ठिते ऽयं क्रमस्संपद्यतइति शक्यं निरूपयितुम् । यद्यपि कचित्प्रयोगविशेषे क्रमविशेषः कश्चिदवस्थितः तथा ऽपि नासावनुष्ठानात्प्रागवगन्तुं शक्यते अस्मिन्नयं क्रमो नास्मिन्निति । तत्रैतदेवापतति अनेन क्रमेणानुष्ठातव्यमिति । ततश्च क्रमविशेषविशिष्टस्य विधेयत्वादविधानाभिधानं प्रलापः । तदेवं सत्यपि

यदि क्रमस्याविधेयत्वमुच्यते ततः सोमेन यजेतेत्यादिष्वपि सोमसाध्यस्य यागस्यैव विधानं न सोमस्य सोमस्तु यागविशेषोपलक्षणमिति शक्यं प्रव्यवस्थातुं तस्यापि चाऽऽकृतिविशेषोपलक्षणत्वेनाविधेयत्वान्न किं चिद्विधेयमवशिष्यते कृतिव्यतिरिक्तमिति सुनिरूपितमत्रभवता भवता । अथ विशेषणत्वे संभवत्युपलक्षणत्वमन्याय्यमिति यागविधानं तत्क्रमे ऽपि समानमन्यत्र स्वसमयापस्माराद् । किं च क्रमविशेषपरिगृहीतप्रयोगावच्छिन्नः प्रयोगविधिरिति वदता प्रयुक्तानां क्रमश्चिन्त्यत इति प्रयोगविध्युत्तरकालं क्रमनिरूपणं वदन्नवधीरितः स्यादिति। अपि च ।

वचसो ऽध्वर्युरित्यादेर्विधेयं किंनिरूपितम् ।
कर्त्ता चोदकतः सिध्येदसिद्धन्वचसा ऽपि न ॥१०॥

यदि क्रमो न विधीयते कस्तर्ह्यध्वर्युर्गृहपतिं दीक्षयित्वेत्यस्य विधेर्विषयः । दीक्षा तावत्सर्वेषां यजमानत्वाच्चोदकेनैव प्राप्ता । अध्वर्युरपि कर्त्ता तेनैव प्राप्नोति यदि क्रमो न विधीयेत निर्विषयमेव वाक्यं स्यात् । अत्राहुः । अध्वर्युविधावपि नियम एवेति । अस्यार्थः । सत्रे हि ये यजमानास्तऋत्विज इत्यार्त्विज्ये यजमानविधानादृत्विजस्तावन्निवृत्ताः यजमानैरेव सर्वमार्त्विज्यं कर्त्तव्यम् । तत्र येनैव केन चिदाध्वर्यवं कुर्वता अध्वर्युव्यपदेशो लब्धस्तेनैवान्यदप्याध्वर्यवमनुष्ठेयमिति नास्ति प्रमाणम् । एवं च सर्वत्र सर्वेषां कर्त्तृत्वमनियमेनोपप्लवतइत्यध्वर्युर्गृहपतिं दीक्षयित्वेत्यनेन गृहपतिसंज्ञकस्य दीक्षायामध्वर्युः कर्त्ता नियम्यतइति । तदिदमयुक्तम् । यदि चोदकेन कर्त्तृविशेषो दीक्षायां न लभ्यते ततो वचनेनापि न लब्धुं शक्यते तद्वर्त्तिनां पदानामज्ञायमानार्थत्वात् । सर्वे अध्वर्य्वादिशब्दाः सर्वेषु पुरुषेषु वर्त्त-

न्ते तत्र को ऽध्वर्युः कस्य गृहपतिसंज्ञकस्य दीक्षायां कर्त्ता नियम्यते के वा निवर्त्स्यन्ते सर्वे हि पुरुषाः शक्यन्ते ऽभिधातुमध्वर्य्युशब्देन, न चैवं सत्रेनेन कर्तृविशेषो नियन्तुं शक्यते । स्यादेतत् । गृहपत्यादिचतुष्टयमेको दीक्षयतीत्येतावद्विधीयते स चाध्वर्युकार्यदीक्षाकरणात्तच्छब्देनाभिधीयतइति । भवेत्तावदेवमपि कथं चित्काशकुशावलम्बनं यदि ब्रह्मादयो निर्द्धारयितुं शक्यन्ते तेषु त्वनिर्द्धार्यमाणेषु केषामेको दीक्षयितेत्युच्यते । एवं प्रतिस्थात्रादिषु नियम्येषु ब्राह्मणाच्छंस्यादिषु नियमविषयेषु द्रष्टव्यम् । तेन यदि तावच्चोदकप्राप्तानां नानापदार्थानां बहुषु यजमानेषु कर्तृषु अव्यवस्थयोपप्लुतेषु व्यवस्थाऽपेक्षायां प्रकृतौ या व्यवस्था दृष्टा सैवाङ्गीकर्त्तव्या कथं चिद्व्यवस्थासम्भवे ऽव्यवस्थायोगात् । समाख्ययैव तु प्रकृतौ व्यवस्था। न हि समाख्या स्वयमेव कर्तृनियमस्य विधायिका प्रयोगवचनस्तु शब्दो बहूनामर्थानां बहुभिरनुष्ठानं विदधद्व्यवस्थापेक्षः सन्समाख्यया कथं चिदवगतां व्यवस्थामाश्रयति । एवं च सत्रप्रयोगवचनो ऽपि तदपेक्षस्सन् प्रकृतावेकेन ये पदार्थाः कृताः तानिहाप्येककर्तृकान्विदधाति ततः प्राप्तत्वान्न दीक्षायामध्वर्य्युर्विधातव्यः। अथ न व्यवस्था तथा ऽप्यध्वर्य्युशब्दस्य पुरुषविशेषप्रतिपादकत्वमनुपपन्नमित्युभयथा ऽपि न कर्तृविधिः सम्भवतीति क्रमस्यैव विधेयत्वमवश्यमङ्गीकर्त्तव्यम् । तस्माच्छ्रुत्याद्यवगतक्रमविशेषविशिष्टस्य प्रयोगस्य विधानात्क्रमस्यापि विधेयत्वमङ्गत्वं च सिद्धम् । आह च

"क्रमो ऽपि शेष एवैकप्रयोगवचनाश्रयः" इति ।

किमिदानीं प्रयोगविधिविधेयः क्रमः ओमित्युच्यते । कथमविनियुक्तस्य प्रयोगविधिना विधानम् । अस्यापि श्रुत्यादिभिर्विनियोगाददोषः । यथा श्रुतिलिङ्गादिभिर्विनियुक्ताः

पदार्थाः प्रयोगविधिना विधीयन्ते तथा श्रुत्यादिभिः क्रमः । इयांस्तु विशेषः अन्ये कर्म्मस्वरूपानुबन्धाः क्रमस्तु देशादिवत्प्रयोगानुबन्ध इति । न हि तार्त्तीयैरेव सर्वं विनियोक्तव्यमिति नियमः तानि तु पदार्थैदमर्थ्ये, क्रमैदमर्थ्ये तु पाञ्चमिकान्येव श्रुत्यादीनि प्रमाणम् । यद्वैषामपि तार्त्तीयेष्वेवान्तर्भावः शक्यते दर्शयितुमिति न किं चिदनुपपन्नम् । तत्र श्रुतिक्रमो नामायं यत्र क्रमपरं वचनं तद्विशिष्टपरं वा । यथा ऽध्वर्युर्गृहपतिं दीक्षयित्वा, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, वषट्कर्त्तुः प्रथमभक्ष, इति । अर्थक्रमो ऽयं यः प्रयोजनवशेन निर्णीयते यथा पाकहोमयोः । विधायकवाक्यस्थो मन्त्रवाक्यस्थो वा यः पदार्थेष्वाश्रीयते स पाठक्रमः यथा प्रयाजादीनामाग्नेयादीनां च । यस्तु सह प्रयुज्यमानेषु सन्निपातिनामावृत्त्या ऽनुष्ठाने कर्त्तव्ये प्रथमक्रम एव द्वितीयादिष्वपि प्रयोगवचनावगताङ्गसाहित्याबाधायाश्रीयते स प्रवृत्तिक्रमः । यथा प्राजापत्येषु उपाकरणक्रम एव नियोजनादिष्वपि प्रयोगवचनाद्भवति । यस्तु प्रकृतौ नानादेशावगतानां पदार्थानां विकृतावेकस्य देशे सर्वेषामनुष्ठाने वचनात्कर्त्तव्ये सति यस्य देशे ऽनुष्ठीयन्ते तस्य प्रकृत्यवगतस्थानाबाधेनागन्तुभिः क्रमः समाश्रीयते स काण्डक्रमः । यथा साद्यस्क्रे सवनीयस्थाने पशुषु सहालभ्यमानेषु तस्याश्विनग्रहानन्तर्यं न बाध्यते । मुख्यक्रमस्तु यः प्रधानक्रमः सो ऽङ्गेष्वपि प्रयोगवचनावगताङ्गप्रधानसाहित्याबाधार्थमाश्रीयते यथा सारस्वतौ भवत इत्येकवाक्यचोदितयोः स्त्रीपुंसदेवत्ययोः कर्म्मणोर्याज्यानुवाक्याक्रमेणावगतानुष्ठानयोस्तयोरङ्गेष्वपि प्रधानक्रम एव भवति । सर्वेषामेव क्रमाणां प्रयोगविधिविधेयत्वे सत्यपि मुख्यप्रवृत्तिक्रमयोः प्रामाण्यमपि प्रयोगविध्यवगतसाहित्यनिमित्तमित्यनेन विशेषेण "प्रयोजकवशौ चेष्टौ मुख्यप्रावृत्तिकक्रमावि"-

त्युक्तम् । श्रुत्यर्थपठनमुख्यप्रवृत्तीनां समवाये पारदौर्बल्यम् । पाठे ऽपि मन्त्रपाठाद्ब्राह्मणपाठो दुर्बलः । चोदकाश्रयाच्च क्रमात् विकृतिषु प्रयोगवचनाश्रयो दुर्बलः क्रमः । तत्र श्रुत्यर्थाभ्यां पाठस्य दौर्बल्यं क्रमकोपाधिकरणे ऽभिहितम् । श्रुत्यर्थयोस्तु नैव विरोधः सम्भवति यथाश्रुत्येव प्रयोजनकल्पनात् । यदि हि हुत्वा पचेदिति श्रूयेत ततः पाकस्य दृष्टार्थतां परिकल्प्य येन केन चिद् द्रव्येण हूयेत । तथा पाठे ऽपि मन्त्रगताद्ब्राह्मणगतस्य दुर्बलत्वं मन्त्रतस्तु विरोधे स्यादित्युक्तम् । ततस्तु मुख्यक्रमस्य प्रकृतौ तु स्वशब्दत्वादित्यत्र दौर्बल्यमुक्तम् । ततो ऽपि प्रवृत्तिक्रमस्यावदानाभिघारणासादनेष्वित्यत्र । चोदकाश्रयाच्च प्रयोगवचनाश्रयस्य दुर्बलता तद्वचनात्तु विकृतौ यथाप्रधानं स्यादित्यत्रोक्ता । एवं बलाबलविभक्तैः श्रुत्यादिभिः समर्पितेन क्रमविशेषेण विशिष्टः प्रयोगः प्रयोगविधिना विधीयते । ननु चतुर्थे ऽपि प्रयोगविधिव्यापार एव चिन्तितः । अत्रापि स एवेति कथं लक्षणभेदः । सत्यमुभयत्रापि प्रयोगविधिविचार एव किन्तु तत्र केषामङ्गानां किमर्थं प्रयोजको भवतीति प्रयोज्यविशेषविचारः कृत इह तु किंक्रमविशिष्टं प्रयोगं विधत्तइति प्रयोविशेषविचार इति लक्षणभेदः ।

तदेवं पञ्चलक्षण्या कार्यवर्गे निरूपिते ।
को ऽनेनाधिक्रियेतेति षष्ठे ऽध्याये निरूप्यते ॥११॥
निरूपिते ह्यनुष्ठेये शक्यं शक्तिनिरूपणम् ।
तस्यां निरूपितायां तु तदधीना ऽधिकारधीः ॥१२॥

न ह्यनवगते ऽनुष्ठेये तच्छक्तिरवगन्तुं शक्या । तया चाधिकारनिरूपणमिति भवत्यनुष्ठेयप्रतिपादकस्याध्यायपञ्चकस्याधिकारविचारहेतुत्वम् । न चैकस्यैवाध्यायस्य हेतुत्वम् । तत्सं-

घातस्याप्येककार्यप्रतिपादकस्य पूर्वपट्कस्येवोत्तरपट्कं प्रति तदुपपत्तेः । एकस्याप्यध्यायस्य नानानयसंघातात्मकस्यैककार्योपधानादेवैकत्वम् । तदध्यायपञ्चकस्याप्यनुष्ठेयप्रतिपादनादैक्यमापादितस्याधिकारहेतुत्वमुपपन्नम् । तत्र प्रथमं तावदुपोद्घातत्वेनाधिकारसद्भावः प्रतिपाद्यते । सति हि तस्मिन्कस्यायमिति विचारस्सम्भवति नान्यथेति । तत्र स्वर्गकामो यजेतेति भावना भाव्याकाङ्क्षिणी समानपदोपादानलक्षणया श्रुत्योपनीतमनन्योपसर्जनं च धात्वर्थमेव पदान्तरोपनीतपुरुषविशेषणीभूतस्वर्गप्रहाणेन भाव्यत्वेन स्वीकरोति श्रुतेर्वाक्याद्बलीयस्त्वात् स्वर्गादिद्रव्येण यागं कुर्यादिति वाक्यार्थः । कामशब्दश्च कर्म्म कुर्वाणस्य तत्साधने तत्सिद्ध्यर्थं कामना भवत्येवेत्यनुवाद इति श्रुतिलिङ्गाभ्यां वाक्यबाधेन यागस्य प्रधानत्वान्न किं चिदनेन फलं साध्यतइति नास्त्येवाधिकार इत्युक्त्वा विधिश्रुतिबलेन सिद्धान्तः कथितः । विधिर्हि समानपदोपात्ताद्धात्वर्थाद्भावनायाः सन्निकृष्टः प्रथममेव तामवरुध्य पुरुषार्थाय नयति प्रवर्त्तनात्मकत्वादपुरुषार्थफले च व्यापारे पुरुषस्य प्रवर्त्तयितुमशक्यत्वात्तेन प्रवर्त्तनात्मकविध्यन्वयादेव समीहितरूपे भाव्ये ऽपेक्षिते तद्विशेषमात्रं वाक्यादवगम्यते तस्मिंश्चावगते समानपदोपात्तो धात्वर्थः प्रत्यासत्तेः करणतया स्वीक्रियते द्रव्यादि त्वितिकर्त्तव्यतया । आह ।

विधेर्भावनया योगः पूर्वं यद्यंशसंगतेः ।
पश्चात्संबध्यमानानां ततो न स्याद्विधेयता ॥ १३ ॥

अथ सर्वांशसंपूर्णा भावना विधिगोचरः ।
विधिहीना ततो न स्यात्पुरुषार्थफला क्रिया ॥ १४ ॥

यदि तावदंशत्रयान्वयात्प्रागेव केवला भावना विधीयते ततो विशिष्टभावनाविध्यधीनविधीनामंशानां पश्चाद्भावनाऽन्वये सत्यपि केवलाया एव विधिसंस्पर्शान्न विधेयत्वं स्यात् । अथ तु नांशत्रयान्वयात्प्राक् भावनाया विध्यन्वयः ततो विधिविधुरा सती धात्वर्थमेव प्रत्यासत्तेर्भाव्यमवलम्बतइति न पुरुषार्थस्य भाव्यत्वं सिध्येदिति । नैतदेवम् ।

विधिभावनयोः श्रुत्या संगतिः पूर्वमीयते ।
अयोग्यत्वात्तदा त्वेषा निर्वृतिं नैव विन्दति ॥ १५ ॥
सङ्गतिप्रतिपत्तेश्च तदेवैवं प्रतीयते ।
यादृशैः परिपूर्णेयं भावना विधिसङ्गतिम् ॥१६॥
लभेत तादृशैरंशैः पूरणीयेति तद्भवेत् ।
पुरुषार्थस्य भाव्यत्वमंशानां च विधेयता ॥१७॥

प्रथमन्तावदेकशब्दोपात्तयोर्विधिभावनयोः श्रुत्या सम्बन्धोऽभिधीयते तस्यां त्ववस्थायां भावनायाः केवलाया अननुष्ठेयत्वात्प्रतीता ऽपि सङ्गतिर्नैव निष्पद्यते । अनिष्पन्नायामपि च तस्यां तत्प्रतिपत्त्या तदैवं पुरुषो निरूपयति अस्यास्तावद्विध्यन्वयेन भवितव्यम् । ततो यादृग्भिरंशैस्तंयुक्तेयं विध्यन्वयं भजते तादृग्भिः पूरयितव्या । न चापुरुषार्थफला तदन्वयमर्हति तस्मात्पुरुषार्थफलेत्यध्यवसाय तद्विशेषमपेक्षमाणः समानपदस्थं धात्वर्थमपुरुषार्थत्वादुल्लङ्घ्य पदान्तरोक्तमपेक्षते तत्र स्वर्गकामादिशब्देन तद्विशेषस्य प्रतिपत्तेस्तेन सह भावना सङ्गच्छते तदन्विता च करणापेक्षा सती प्रत्यासत्तिवशाद्भावार्थाधिकरणन्यायेन समानपदोपात्तं धात्वर्थं करणतया स्वीकरोति ततः कथंभावापेक्षायां श्रुत्याद्यवगतान्यङ्गानीत्थंभावेन गृह्णाति तत-

ऽ्सर्वांशविशिष्टा भावना विधीयते। तदेवं प्रथममेव विध्यन्वयप्रतीतेः पुरुषार्थस्य भाव्यत्वं सिध्यति। प्रतीतस्यापि च विध्यन्वयस्यांशत्रयसम्बन्धोत्तरकालमेव निर्वृत्तेरंशानामपि विधेयत्वं सिध्यति। अतो न कश्चिद्दोष इति।

ननूत्पत्त्यादिभेदेन चातुर्विध्यं विधेः कथम्।
प्रयोगविधिरेवैको भवतैवं प्रकीर्त्तितः ॥१८॥

श्रुत्यादिभिरुपनीतेंऽशत्रये पश्चाद्विधिरिति वदता प्रयोगविधिरेवैको विधिरित्युक्तं भवति। चतुर्विधं च तं समाचक्षते।

उत्पत्तिविधिनामैको यो द्वितीये विचार्यते।
विनियोगविधिस्त्वन्यो यस्तृतीये विचार्यते ॥१९॥
चतुर्थे पञ्चमे चैव प्रयोगविधिचिन्तनम्।
अधिकारविधिस्त्वन्यो यः षष्ठाध्यायगोचरः ॥२०॥

तस्माद्दैकध्याभिधानमनुपपन्नमिति। उच्यते।

उत्पत्त्यादित्रयाणां च विध्यन्वयबलाद्गतेः।
स्वरूपेण प्रयोक्तृत्वाच्चातुर्विध्यं विधेर्मतम् ॥२१॥

अप्रवृत्तप्रवर्त्तकस्वरूपस्य विधेर्यदा तत्सिद्ध्यर्थं कर्म्मस्वरूपपरत्वं भवति तदा विध्यन्वयप्रतिपत्तिवशादेव तद्विषयस्य कर्म्मणः प्रमाणान्तराप्राप्तिपरिकल्पनात् उत्पादकत्वसिद्धिः तद्वशेनैव च तद्विषयस्य फलसाधनत्वं फलवदुपकारकत्वं वा कल्प्यतइति विनियोजकत्वम्। फलसाधने च कर्म्मणि पुरुषस्याधिकारः स्वामित्वं सिध्यतीत्यधिकारोऽपि विधिप्रमेय एव। स्वरूपेणैव च प्रयोजकत्वमिति युक्तं प्रमेयचातुर्विध्याद्विधेश्चातुर्विध्यं विधिशब्दो हि प्रवर्त्तकैकरसं विध्यात्मानमभिधत्ते तद-

न्वयानुपपत्त्यैवेतरत्रयं कल्पयतीति प्रमेयचतुष्टयसिद्धिः । न तु स्वरूपेणैव चातुर्विध्यम् । आह च ।

"विधात्री च तृतीयोक्ता प्रयोगो यन्निबन्धन" इति ।

चतुष्टये ऽपि चैकस्मिन् क चित्किं चिद्विवक्षितम् ।
एकं[1] द्वयं त्रयं वा ऽपि क चिच्चापि चतुष्टयम् ॥२२॥

अग्निहोत्रं जुहोतीत्युत्पत्त्यैकपरत्वं समिधो यजतीत्युत्पत्ति-विनियोगपरत्वम् असति विधौ प्रकरणविनियोगासिद्धेरिति प्रागेव गतम्। ज्योतिष्टोमेन स्वर्गकामो यजेतेति विनियोगाधिकारप्रयोगपरत्वम् । उत्पत्तेः सोमेन यजेतेत्यनेन सिद्धत्वात् । उद्भिदा यजेत पशुकाम इति चतुष्टयपरत्वम् । एकस्याप्यन्यतो ऽसिद्धेः यथा च विनियोजकत्वे ऽपि विधेः श्रुत्यादीनां विनियोजकत्वं सिध्यति तथा प्रागेवाभिहितम् । प्रकृतमनुसरामः । तदेवं विधिबलेन पुरुषार्थस्य भाव्यत्वे ऽवधारिते तद्विशेषापेक्षायां कामसम्बन्धावगतप्राधान्यस्य स्वर्गादेर्भाव्यत्वं पुरुषोपसर्ज्जनस्यापि भवति न पूर्वपक्षइव साधनत्वम् । न हि पूर्वपक्षे ऽपि स्वर्गकामशब्दः पुरुषपरः किं तु स्वर्गाख्यस्य द्रव्यस्य क्रियासाधनत्वप्रतिपत्तिपरः । कथं पुनः पुरुषवचनशब्दस्योभाभ्यामपि वादिप्रतिवादिभ्यां तत्परत्वमवधार्यते । उच्यते । पूर्वपक्षवादी तावदेवं मन्यते क्रियासामर्थ्यादेव तावद् गुणभूतः पुरुषः प्राप्तः तत्र स्वर्गकामशब्देन न कश्चित्पुरुषविशेषो राजशब्देनेव व्रीह्यादिशब्देनेव वा द्रव्यविशेषः समर्प्यते य एव हि स्वर्गकामः स एवास्वर्गकामो ऽपि भवति । यदा तत्काम इति कालोपलक्षणत्वे वा स एव दोषः । तस्मान्न स्वर्गकामनाविशिष्टस्य पुरुष-

[1] एवमिति पुस्तकान्तरपाठः ।

स्यात्र शेषत्वेनान्वयः । तत्र विशेष्यांशस्य प्राप्तत्वाद्विशेषणपरत्वं लोहितोष्णीषादिवद्भवति । तत्रापि स्वर्गकामनायाः शेषत्वेनोपदेशे अदृष्टार्थता स्यात् । न हि स्वर्गकामनायाः कर्म्मणि दृष्टोपकारः संभवति । गौरवं च स्वर्गविशिष्टस्य कामस्याङ्गत्वोपदेशे विधेः स्यात् । स्वर्गस्य तु द्रव्यरूपस्य कर्म्मसाधनत्वेन दृष्टार्थत्वात्तन्मात्रस्य चाङ्गत्वविधाने लाघवात् द्रव्योपदेश एवायम् । कर्त्तृवचनस्त्वणूप्रत्ययः सह कामयतिना ऽनुवाद इति । सिद्धान्तस्तु विधिबलेनैव व्यापारस्य भावनायाः पुरुषार्थत्वमवगम्यते न ह्यस्वार्थे कर्म्मणि कश्चित्प्रेक्षावान्प्रवर्त्तते । तादर्थ्यं च तदपेक्षितोपकारसाधनत्वात् । तेन विधित एवापेक्षितोपकारसाधनद्वारेण पुरुषार्थत्वे भावनायाः समधिगते सत्युपकारविशेषापेक्षायां स्वर्गकामशब्देन पूर्वोक्तन्यायावधारितानुपपन्नपुरुषविशेषप्रतिपादकभावेन विशिष्टफलापेक्षिणः पुरुषस्य शेषित्वमभिधीयमानं विशेषणभूतस्वर्गाख्योपकारविशेषप्रतिपत्तिपरं भवति । तत एव स्वर्गकामशब्दः पक्षद्वये ऽपि न पुरुषपरः किं तु स्वर्गपरः । गुणप्रधानभावे तु विवादः । अत एवोक्तं किं स्वर्गो गुणतः कर्म्म प्रधानतः उत कर्म्म गुणतः स्वर्गः प्रधानत इति । किमिदानीं शेषित्वेन फलकामस्यान्वयः । बाढम् । कथं तर्हि राजा राजसूयेन स्वाराज्यकामो यजेतेत्यादिषु राजादिशब्देन शेषप्रतिपादकेन कामशब्दस्य सामानाधिकरण्यम् । उच्यते । उभयोरपि कर्त्तृपरत्वात् । कर्त्तृत्वेन हि राज्ञ इव फलकामस्यान्वयः समस्त्येव । स त्वन्वयः कर्म्मणा पुरुषस्योपकारः कथं भवतीत्येवमर्थः मलिनेन स्नातव्यं क्षुधितेनाशितव्यमितिवत् । यत्र हि तृतीयाश्रुत्या विस्पष्टे ऽपि कर्त्तृत्वे ऽभिहिते शेषित्वमत्र मलिनादेर्भवति तत्र स्वर्गकामादेः फलसमभिव्याहारकल्प्यकर्त्तृत्वस्य न भवतीति कुत एतत् । न खलु कर्त्तृत्वान्वयः शेषिभा-

वस्य परिपन्थी सर्वकारकाणां शेषित्वसंभवः प्रयाजशेषादीनां प्रागेव दर्शितो यतः । यद्येवं कथं तर्हि द्वितीया शेषिविभक्तिः तृतीयादयस्तु शेषविभक्तय इति विशेषसिद्धिः । उच्यते । साध्यसाधनभावप्रतिपादनादुपपन्नो विशेषः । द्वितीया हि साध्यभावं प्रतिपादयति साध्यत्वं च शेषित्वप्रत्यासन्नम् । न ह्यसाध्यस्य शेषित्वं संभवति तेन तदभिधायिन्या द्वितीयया तदवगतिर्युक्तैव । तृतीयादयस्तु शेषभावप्रत्यासन्नसाधनत्वाभिधानात्तत्प्रमाणतयोच्यन्ते यत्र तु तत्प्रतिपादितसाधनभावस्यैव शेषित्वं भवति तत्र साध्यत्वमशब्दाभिहितमपि कल्पयितव्यमिति विशेषसिद्धिः । तेन कर्त्तृत्वान्वितयो राजस्वाराज्यकामयोर्विधिवलेन स्वाराज्यकामस्य शेषित्वं राज्ञस्तु द्रव्यकर्म्मसंयोगन्यायेन साधनत्वानुगुण्यात्तच्छेषत्वमेव भवति । यो ऽपि कैश्चिन्नियोज्यत्वेनान्वयः फलकामस्येष्यते सो ऽपि विविच्यमानः शेषित्वान्वय एव यथोक्तो भवति । इतरथा तु न कर्त्तृत्वान्वयाविशेषात् । तथा हि ।

नियोज्यो नाम यः कार्यमात्मीयत्वेन बुध्यते ।
तदीयत्वं च कार्यस्य तत्कृतिव्याप्यतात्मकम् ॥२३॥
यत्कृत्या व्याप्यते यच्च ध्रुवं तत्कर्तृकं हि तत् ।
तत्कर्त्तृत्वनियोज्यत्वे शेषशेषित्वकारिते ॥ २४ ॥

स्वर्गकामस्य कर्त्तृत्वान्वयं पूर्वपक्षीकृत्य नियोज्यत्वेनान्वयः सिद्धान्तीक्रियतइति यस्य दर्शनं सो ऽपि शेषशेषिभावव्यतिरेकेणान्वयस्य भेदं वक्तुं न क्षमते । तथा हि । यो ममेदं कार्यमिति बुध्यते स नियोज्यः ततश्च स्वर्गकामो यजेतेत्यनेन स्वर्गकामस्येदं कार्यमिति प्रतिपादयितव्यम् । स्वर्गकामकृतिव्याप्यमित्यर्थः । तथा

हि सत्यसौ ममेदं कार्यमिति बुध्यते यच्च यस्य कृत्या व्याप्यते तत्तत्कर्तृकमेव यथा भावार्थः । तस्माद्राजस्वाराज्यकामयोः कर्तृत्वेनान्वयात्स्वाराज्यकामस्य नियोज्यत्वं राज्ञस्तु कर्तृत्वमित्ययं विशेष एवं समर्थयितव्यः । कर्तृत्वे ऽपि स्वाराज्यकामस्य शेषित्वं कार्यं प्रति राज्ञस्तु शेषत्वमिति । ननु बोद्धृत्वेन नियोज्यत्वं न शेषित्वेन किमिदानीं कामशब्दः कामिनः कार्यं विषयावच्छिन्नं प्रति बोद्धृत्वमभिधत्ते स्वर्गकामबोद्धृकं यागावच्छिन्नं कार्यमिति । यद्येवं बोद्धृत्वव्यतिरेकेण कामिनः कार्यान्वयाभावाद्यजेतेत्यनेन यो ऽर्थो ऽभिहितस्तमेव केवलं बुध्येत कार्यमेतदिति न तु ममेदं कार्यमिति ममशब्दाभिधेयस्य सम्बन्धस्य नियोगेन सहात्मनः कस्य चिदप्यभावात् । ततश्चानियोज्यत्वमेव । न हि यः कार्यमिति बुध्यते स नियोज्यः किं तु यो ममेदं कार्यमिति बुध्यते । न च प्रवृत्तिः सिद्ध्येत् । न हि कार्यमित्येव कश्चित्प्रवर्तते अपि तर्हि ममेदं कार्यमिति । अनर्थकश्च नियोज्यप्रतिपादकः शब्दः स्यात् अन्तरेणापि तच्छब्दमाख्यातार्थं व्युत्पन्नः स्वर्गकामो बुध्यतएव । तत्र परिसंख्या स्यात् । स्वर्गकाम एव व्युत्पन्नो बुध्येत नान्य इति सा चाशक्या परिसंख्यायमाने ऽपि व्युत्पन्नानां बोधस्यानिवार्यत्वात् । पितृयज्ञादौ च सर्वेषामेव व्युत्पन्नानां बोद्धृत्वलक्षणनियोज्यत्वसद्भावान्न तदध्याहारः स्यात् । तस्मात्स्वर्गकामस्य ममेदं कार्यमिति एवंविधबोद्धृत्वलक्षणनियोज्यत्वमिच्छता ऽवश्यमस्येदं कार्यमित्येवमेव वचनेन प्रतिपादयितव्यमिति वक्तव्यम् । तथा च कर्तृत्वेनैवान्वयप्रसङ्गः । यद्युच्येत सत्यमयमेवान्वयः तथा ऽपि तु न कर्तृत्वनियोज्यत्वसङ्करः विषयभेदात्कर्तृत्वं हि भावार्थे नियोगे च नियोज्यत्वमिति ।

तदयुक्तं न भावार्थव्यतिरेकेण किं चन ।
कार्यं प्रसिद्धमद्यापि नियोज्यत्वे स्थिते हि तत् ॥२५॥

एतदधिकरणसिद्ध एव हि नियोज्यान्वयः क्रियातिरिक्त-कार्याभिधानकल्पनाबीजम् । अतः प्राक् न तत्सिद्धिरिति न विषयभेदादसङ्करः शक्यते ऽभिधातुम् । लोके च तदभावात् देवदत्त गामानयेत्यादिषु सम्बोधनविभक्तिसद्भावे ऽपि देवदत्ता-दीनां नियोज्यत्वं न स्यात् । तस्मात्कार्य्यं प्रति शेषित्वमेव नियोज्यत्वं च कर्त्तृत्वमित्येव वाच्यम् । यस्तु ब्रूते—

शेषशेषित्वभेदेन सत्यं कर्त्तृनियोज्यते ।
कृतिं प्रति त्वसौ भेदः कार्य्ये तु गुणता द्वयोः ॥२६॥

यद्यपि कर्त्तृत्वनियोज्यत्वयोः शेषशेषित्वभेदादेव विशेष-स्तथा ऽपि न नियोगं प्रति नियोज्यस्य शेषिता तस्य सर्वप्र-धानत्वात् । यथा ऽऽह “नियोगसिद्धौ सर्वं तदनुगुणमिति केन नेष्यत”इति । किं तर्हि कृतिं प्रति शेषित्वं नियोज्यत्वम् । तां च प्रति शेषत्वं कर्त्तृत्वमिति तेनात्मार्थकृतिव्याप्यं कार्यं बु-ध्यमानो ऽपि नियोज्य इत्युच्यते न तु कार्यमेवात्मार्थं तेन स्व-र्गकामो यजेतेत्यस्य को ऽर्थः यागावच्छिन्नं स्वर्गकामार्थकृति-व्याप्यं कार्यमित्यर्थः । तेन कार्यं प्रत्युभयोः कर्त्तृनियोज्ययोः शेषत्वे सत्येव कृतिं प्रति शेषशेषिभावादसङ्कर इति । सो ऽपि वृथैव क्लिश्यति तथा हि ।

कृतिर्हि कार्यशेषत्वान्नान्यशेषत्वमश्नुते ।
कार्ये तच्छेषभूते ऽस्यास्तद्द्वारेण भवेदिदम् ॥२७॥

न खलु नियोगशेषभूता अभिधानत एवावगम्यमाना कृतिः पुरुषशेषभावमनुभवितुमर्हति । अन्यार्थस्यान्यार्थताऽनवकल्प-नात् । यदि तु तत्कार्यं पुरुषशेषो भवेत् ततस्तद्द्वारेण कृतेरपि

संस्काराणामिव कारकद्वारेणापूर्वशेषता पुरुषशेषत्वं भवेन्नान्यथा । नन्वसत्यपि नियोगस्य पुरुषशेषत्वे फलस्य तच्छेषत्वात्तस्यापि तथैव कृत्या व्याप्यत्वात्तद्द्वारेण कृतेः पुरुषशेषता भविष्यतीति । का वार्त्ता नैमित्तिकनिषेधाधिकारयोः । न हि तत्र फलान्तरमस्ति यद्द्वारेण कृतेः पुरुषशेषता भवेत् । अस्ति च तत्रापि निमित्तवान्निषिध्यमानक्रियाप्रवृत्तश्च नियोज्यः स कथमात्मार्थकृतिव्याप्यं कार्यं जानीयात् । तस्मान्नियोगरूपस्यापि कार्यस्य पुरुषार्थत्वमवश्यमभ्युपेयम् । युक्तं चैतत् । न ह्यस्वार्थं कश्चिदपि ममेदं कार्यमित्यवगन्तुमर्हति । यदि नैवं फलस्यापि तर्हि न पुरुषार्थता सिध्येत् तस्यापि हि ममेदं कार्यमित्येतादृश्येवावगतिः । तस्मादकामेनापि कार्यमेव प्रति पुरुषस्य शेषित्वं नियोज्यत्वं शेषत्वं च कर्त्तृत्वमित्येव विवेको भणितव्यः । एवं च सम्बोधनविभक्तिर्नियोज्ये प्रमाणमित्ययुक्तम् । अग्नीदग्नीन्विहरेत्यादिष्वग्नीदादीनां कृतिं कार्यं वा प्रति शेषित्वाभावादशेषिणश्चानियोज्यत्वात् । आह ।

विध्यर्थे कार्यरूपे स्याच्छेषित्वेन नियोज्यता ।<br>
प्रवर्त्तनात्मकत्वे तु प्रवर्त्यस्य नियोज्यता ॥२८॥

प्रवर्त्तनारसो ह्यहमिदं कुर्यामित्येवंविधान्तःसंकल्पमूलात्मा विधिरिति भवतां सिद्धान्तः । स च प्रवर्त्यं भाव्यमिव भावना अपेक्षते प्रवर्त्यश्च नियोज्यः तत्र स्वर्गकामशब्दः किं भावनापेक्षितं भाव्यं समर्पयेत् आहो स्विद्विध्यपेक्षितं नियोज्यम् उभयपरत्वानुपपत्तेर्वैरूप्यापातादन्यतरेणान्यतरसिद्धेः । न हि स्वर्गफले कर्म्मण्यतदर्थी नियोज्यः संभवतीति फलेन नियोज्यसिद्धिः स्वर्गकामस्य चान्यफले कर्म्मणि नियोज्यत्वायोगान्नियोज्यविशेषणफलसिद्धिः । तत्र स्वर्गकामशब्दस्य पुरुषवचनत्वान्नियोज्यपरतैव युक्तेति । उच्यते ।

विधेरपेक्षितस्सत्यं नियोज्यो न त्वसौ तदा ।
अवधारयितुं शक्यः फलस्य त्वस्ति योग्यता ॥२९॥

यद्यपि फलवन्नियोज्यो ऽपेक्षितस्तथा ऽपि नासावनुष्ठेयवर्गावधारणात्प्रागवधारयितुं शक्यते । न हि फलकाममात्रस्य नियोज्यत्वम् । कस्य तर्हि अनुष्ठानशक्तियुक्तस्य । सा चानुष्ठेयावगमाधीननिरूपणा । अङ्गप्रधानयुक्तैव च क्रिया ऽनुष्ठेया तस्याश्च यथा विधिरंशत्रयसम्बन्धोत्तरकालमेव भवति न प्रथमम् अयोग्यत्वात् तथा नियोज्यो ऽपि । फलं तु प्रागेवांशान्तरसम्बन्धादवगन्तुं शक्यतइति तत्परमेवेदम् । अवगते च तस्मिन्नंशान्तरे चावधारिते सर्वविशेषणविशिष्टायां भावनायां तत्फलकामं तदनुष्ठानसमर्थं पुरुषं विदधद्विधिर्नियुङ्क्ते । आह च "अङ्गप्रधानवत्यां च भावनायां युगपत्पुरुषनियोग" इति । किं च नियोज्यान्वये ऽपि न पुरुषपरत्वं कामशब्दस्य किं तु फलविशेषपरत्वमेव । तथा हि विधित एवावगम्यते अस्ति हि कश्चिदिह व्यापारे नियोज्यः स चासौ योग्यस्य व्यापारस्य शेषी न ह्यस्वार्थे व्यापारे कश्चिन्नियोक्तुं शक्यते स एव शेषी यो ऽस्य भाव्यं फलविशेषं भोक्तुमभिलषतीत्येवमवगते फलविशेषमात्रे चानवगते तत्परत्वमेव स्वर्गकामशब्दस्य भवति । तत्र किं नियोज्यत्वेन स्वार्थमभिदधत्तत्परः उत शेषित्वेनेति चिन्तायामशक्यावगमनियोज्यपरित्यागेन शक्यप्रतिपत्तिशेषित्वप्रतिपादनमेव वरम् । न हि नियोज्यत्ववच्छेषित्वं शक्तिविशिष्टस्य अनुष्ठानोपयोगिनी हि सा न शेषित्वोपयोगिनी अनुष्ठातुरेव शेषित्वादशक्तानामनधिकारो राजसूयइवाराज्ञः । न हि तत्र राजत्वमधिकारांशपाति तद्वच्छक्तेरप्यधिकाररूपशेषित्वाननुप्रवेशाच्छक्यतएवाङ्गनिरूपणस्य पुरस्तादेव शेषित्वं निरूपयितुमिति शेषित्वेनैव स्वर्गकामस्यान्वयः । स च फलविशेषप्रतीतिपर इति तस्मा-

त्स्वर्गादेः फलत्वेनान्वयात्तत्साधने कर्म्मणि पुरुषस्य सिद्धोऽधिकार इति तद्विशेषनिरूपणमारब्धव्यम् । तत्र प्रधानवाक्येऽविशेषेण सर्वेषामधिकारावगमात्तदनुसारेणाङ्गानां विनियोगाद्यो यच्छक्नोति कर्तुं स तत् कुर्यादिति । तद्यथा ।

द्रवसंहतमांसानामवदानेऽवधारिते ।
स्रुवेणावद्यतीत्येतत्सामर्थ्याद् द्रवगोचरम् ॥ ३० ॥

तथा स्वर्गकामशब्देन सर्वेषामधिकारेऽवगते सत्यङ्गविधयस्समर्थगोचरा भवन्ति तस्मात्तिर्य्यगादीनामप्यधिकार इत्युक्तेऽभिधीयते । नित्यवदङ्गानामन्वयावगमात्पाक्षिकत्वे तद्बाधप्रसङ्गादङ्गोपेतस्यैव फलसाधनत्वं नान्यादृशस्य । नन्वेकार्थत्वादङ्गानां व्रीहियववद्विकल्पे सति येन केन चिदङ्गेनापि युक्तं प्रधानं फलसाधनं स्यात् । मैवं वोचः । न ह्येकार्थत्वमात्रं विकल्पे हेतुः किं तर्हि निरपेक्षाणामेकोपकारसाधनत्वं न च समिदादीनामेकार्थत्वं परस्परनिरपेक्षैस्समिदादिविधिभिः पृथगेवावान्तरापूर्वाख्योपकारपरिकल्पनात् । यथाऽऽह भाष्यकारः । "न च यत्समित्सम्बन्धेन क्रियते तत्तनूनपात्सम्बन्धेने"ति । ननु च सर्वैरंशैरेक उपकारः क्रियतइति दर्शनं तत्कथमुपकारभेदाभ्युपगमः । सत्यमेक उपकारः न तु तत्र नैरपेक्ष्यं यदि हि पूर्वप्रसिद्धमुपकारमुद्दिश्य तत्साधनत्वेन समिदादयो विधीयेरँस्ततस्सर्वेषां नैरपेक्ष्येण तत्साधनत्वावगमाद्विकल्पः स्यान्न त्वेतदस्ति तादर्थ्यमात्रेणाङ्गेषु प्रधानान्वितेषु पश्चादुपकारकल्पनादिति प्रागेवावेदितम् । तेनाष्टदोषदुष्टविकल्पपरिहारार्थं समुदिताङ्गविशिष्टप्रधानभावनाविधानात्सहैव सर्वेषामेकोपकारसाधनत्वेनाग्नेयादीनामिव फलसाधनत्वं समिदादीनामवगम्यते येन यत्रैकार्थ्यं न तत्र नैरपेक्ष्यं यत्र नैरपेक्ष्यं न तत्रैकार्थ्यमिति न

विकल्पसंभव इति । व्रीहियवयोस्तु पुरोडाशप्रकृतित्वादेककार्ययोर्वाक्यद्वयेन निरपेक्षयोरवगमाद्युक्तो विकल्पः । तस्मात्साङ्गस्यैव फलसाधनत्वादनुष्ठानसमर्थस्यैवाधिकारः । यत्तु प्रधानवाक्ये सर्वेषामधिकारावगमात्तदनुरोधेनाङ्गानां समर्थविषयत्वमिति । तदयुक्तम् विरोधाभावात् । न हि प्रधानवाक्येन सर्वेषामधिकारो निश्चितः सामान्येन त्वसाववगम्यते तत्रासति विशेषप्रमाणे सर्वेषां स्यात् । अङ्गानुरोधात्तु विशेषावगमान्न सर्वेषामसौ भवति। यत्र तु प्रधानवाक्यविरोधे नैमित्तिकाधिकारे तत्र यथाशक्त्यङ्गोपसंहारो भवत्येवेति दर्शितं यथा शक्तिनिर्णये । तस्मात्तिर्य्यगादीनां शूद्राणामनाहिताग्नीनामसमाधेयाङ्गवैकल्यानां राजसूयादिषु च ब्राह्मणादीनामनधिकारः। अवदानं तु द्रवादीनां विशेषरूपेणैव तत्र विहितमिति न वस्तुवशेन सङ्कोचनम् । तस्मात् ।

यथाऽधिकारमङ्गानां विनियोगो न वर्ण्यते ।
यथा ऽङ्गविनियोगं स्यादधिकारस्य वर्णनम् ॥३१॥

इति न्यायरत्नमालायां तृतीयः परिच्छेदः ॥

एवं तावदौपदेशिकाङ्गसम्बन्धप्रकारस्सप्रमाणकः पूर्वाध्यायषट्कगोचरः प्रदर्शितः। इदानीमातिदेशिकाङ्गसम्बन्धविधा सप्रमाणोत्तरषट्कप्रतिपाद्या ऽभिधीयते । द्विविधं हि शब्दजातमुपदेशात्मकमतिदेशात्मकं च। इत्थमिदं कर्त्तव्यमित्युपदेशः, तद्वदिदं कर्त्तव्यमित्यतिदेशः । तत्रानुपदिष्टधर्म्मकेष्वैन्द्राग्नादिषु अतिदेशेन तत्प्राप्तिस्सविशेषा सप्तमादिषु चिन्त्यते । तत्र प्रथमं तावदुपोद्घातत्वेन व्यवस्था धर्म्माणां प्रतिपाद्यते। तस्यां हि सत्यामतिदेशविचारः कर्त्तव्यो नान्यथेति । तत्र दर्शपूर्णमासादिकरणपठिताः प्रयाजादयः सर्वयागेष्वेवोपदेशेन सम्बन्धं लभन्ते । कथम् । इतिकर्त्तव्यता हि करणानुग्राहिणी तेनैव सम्बन्धमर्हति । न च तद्विधीयमानं फलं प्रतीतिकर्त्तव्यतया संगन्तुं क्षमते वैरूप्यापत्तेः । तस्माद्यागे फलं प्रति विहिते सत्यनुमितेन वाक्येन यागमनूद्य धर्म्मा विधीयन्ते । ततश्चाविशेषात्सर्वेष्वेव यागेषु विहिता भवन्ति । ननु प्रकरणाम्नानानुमितेन वाक्येन प्रकृतस्यैव यागस्यानुवादात्कथं पारिप्लवत्वम् । नैष दोषः। प्रकरणाम्नानादपि यजिशब्दस्यैव प्रधानानुवादकस्य परिकल्पनात् । तेन च स्वशक्त्या सर्वयागानामनुवादात् । यद्दर्शपूर्णमासाभ्यां यजेतेत्येवं कल्पने ऽप्युद्दिश्यमानस्य विशेषणविवक्षाऽसम्भवात् सर्वार्था धर्म्मा इति पूर्वः पक्षः । सिद्धान्तस्तु भावनैव प्रत्ययार्थः करणेतिकर्त्तव्यताविशिष्टा विधीयते । तस्याश्च सहभाव्यरूपेणापूर्वेण शब्दान्तरादिभिर्भेदः साधितः । तत्रैकस्यामितिकर्त्तव्यताविशिष्टायां विधीयमानाया-मन्यस्याः कुतस्तत्प्राप्तिः । विधीयमानैव भावना त्रिभिरंशैरवैरूप्येण सम्बध्यते । इदमनेनेत्थं कुर्यादिति तस्यां तु विशिष्टायां विहितायां पश्चादरुणैकहायनीन्यायेनांशानां परस्परं सम्बन्धः । यथोक्तम् ।

"एकभावनयोपात्तास्त्रयो ऽप्यंशाः परस्परम् ।
उपकार्योपकारित्वं पश्चादनुभवन्ति ते" इति ॥

यद्यपि करणानुग्राहिण्येवेतिकर्त्तव्यता तथा ऽपि न तेन साक्षात्सम्बध्यते न हि भवतीत्थं याग इति किं त्वित्थं कुर्यादिति । तस्माद्भावनासम्बन्धाद्भाव्यरूपापूर्वविशेषप्रयुक्तमङ्गजातं न पारिप्लवमिति यद्यपि यजिप्रयुक्तं तथा ऽपि प्रकृतयागानुवादेन विधानान्न पारिप्लवं स्यात् । सामान्यवचनो ऽप्यधिकारवशाद्विशेषे वर्त्तते तस्माद्यजिप्रयुक्तत्वपक्षे ऽपि न पारिप्लवत्वम् । तथा च नवमाद्ये भाष्यकारो वक्ष्यति । किं प्रतिप्रकरणं नियता धर्म्मा उत सर्वे सर्वत्रेति । तदपूर्वप्रयुक्तत्वे यजिप्रयुक्तत्वे च सिध्यति । यद्येवं किमिति तर्ह्यपूर्वप्रयुक्तत्वमत्र साधितम् । यजिप्रयुक्तत्वे ऽपि तद्विशेषप्रयुक्तत्वाच्छक्यतएव व्यवस्थापयितुम् । तत्त्वेन तूत्तरं विवक्षता अपूर्वभावनया सम्बन्धः कथित इत्यदोषः । युक्तं तावद्भाव्यनिष्कर्षेण संबध्यमानं धर्म्मजातं भाव्यप्रयुक्तमिति भाव्यं तु नापूर्वं स्वर्गं भावयेदिति ब्रूयुः । भावना च फलस्योच्यतइति तत्र तत्र भाष्यकारवचनात् । स्वर्गकामाधिकरणे ऽपि यागस्य कर्त्तव्यतोच्यते कामस्य वेति भाव्यविशेषविचारं दर्शयन् सिद्धान्ते कामस्यैव भाव्यतेति दर्शयति । विश्वजिदधिकरणे च पूर्वपक्षे न चापूर्वस्य कर्त्तव्यतामाह फलकर्त्तव्यतायां हि सत्यां तदवगम्यतइति वदन् फलभाव्यतोत्तरकालमपूर्वकल्पनं दर्शयति । सिद्धान्ते ऽपि फलविशेषापेक्षां दर्शयन्न व्यापारस्य कर्त्तव्यतोच्यते कस्य तर्हि व्यापारेणान्यस्य कस्येति भवति तदानीं साकाङ्क्षमित्याह । तत्कथमिह यजेर्गुणभावः श्रूयते । दर्शपूर्णमासाख्येन यागसमुदायेनान्यं कुर्यादिति यत्र कर्त्तव्यतया चोद्यते न यजिः अपूर्वं तदित्याह । तस्माद् व्याख्येयमेतत् । किमिति व्याख्यातं स्वयमेव भाष्यकारेण ।

ननु फलमत्र वाक्ये श्रूयते स्वर्गकामो यजेतेति तत्कर्त्तव्यं स्यादिति चोदयित्वा सत्यं श्रूयते न तु तद्याजिना क्रियते विनष्टे यजौ तद्भवति अपूर्वन्तु तेन क्रियते तस्मान्न तस्य कर्त्तव्यतोच्यतइति परिहृतम् । अस्यार्थः । न साक्षाद्यजिर्विशरारुत्वात्फलं साधयति किं तु अपूर्वप्रणालिकया । तेनापूर्वे कृते तेनैव फलं भविष्यतीत्यवधारणात्तत्सिद्ध्यर्थं तत्कर्त्तव्यं भवति तेन भाव्यप्रयुक्तमङ्गजातम् । आन्तरालिकभाव्ये ऽपूर्वे वाङ्नियमवदवान्तरापूर्वे पर्यवस्यतीति एतदेव पुनश्चोद्यपूर्वकं प्रकटितम् । यश्च यजेः प्रत्यक्षः फले गुणभावः स नानावृत्त्या पूर्वं संभवतीति प्राणालिको विज्ञायतइति । एतेन नवमाद्यभाष्यमपि भावप्रत्यार्थे न हीतिकर्त्तव्यता ऽऽकाङ्क्ष्यते कर्त्तव्यं कथमिति न यजिः कीदृश इति तस्माद्यत्कर्त्तव्यं तस्येतिकर्त्तव्यतया संबन्धो ऽपूर्वं च तदित्येतद्व्याख्यातं कर्त्तव्यमिति भाव्यनिष्ठं व्यापारं विधियुक्तं प्रत्ययार्थं दर्शयति । तस्माद्यत्कर्त्तव्यमिति यत्तस्य व्यापारस्य भाव्यं तदर्थमितिकर्त्तव्यताजातमित्यर्थः । अपूर्वं च तदिति फलस्य भाव्यत्वं साक्षादसंभवदपूर्वे संक्रान्तमतस्तदेव साक्षाद्भाव्यमित्यपूर्वप्रयुक्तमित्यर्थः । यदि पुनरनेन भाष्येणापूर्वस्य प्रत्ययवाच्यत्वमुच्यते ततो विश्वजिदधिकरणे व्यापारेणान्यस्य कर्त्तव्यतोच्यते कस्येति भवति साकाङ्क्षं तत्राध्याहारो ऽवकल्पतइति न युज्यते । यदा ह्यपूर्वाख्यस्य भाव्यविशेषस्य स्वशब्देनैवाभिधानं तदा कस्य भाव्यत्वमित्याकाङ्क्षा न जायेत यत्र तद्विशेषाध्याहारो भवेत् । यदा तु भाव्यनिष्ठो व्यापारः सविधिकः कर्त्तव्यमिति भाव्यविशेषापेक्षानिमित्तो ऽध्याहारः । एवमन्यत्रापि यागे वा कर्त्तव्यतोच्यते कामे वेति न तावदपूर्वं कर्त्तव्यमित्युक्त्वा ननु च फलं कर्त्तव्यं स्यादित्यनेन तदेवोपपाद्यते नापूर्वस्य भाव्यविशेषशब्दार्थत्वम् । तस्मादेवमाद्यनालोचनेन प्रत्ययार्थत्वमपूर्व-

स्य भाष्यकारेणोक्तमिति जल्पतामुपेक्षैवोत्तरमिति । किमर्थं पुनः प्रत्यक्षप्रतिपन्नभाव्यभावफलपरित्यागेनानुमानिकभाव्यभावस्यापूर्वस्य प्रयोजकत्वमङ्गीक्रियते । एतदपि भाष्यकारेणैव फले यजेः प्रत्यक्षो गुणभावः आनुमानिको ऽपूर्वइति चोदयित्वा प्रत्यक्षो ऽपि नानादृत्यापूर्वं सम्भवतीति प्राणालिको विज्ञायते । न चैतावता प्रत्यक्षश्रुतयागकरणत्वहानिः । यतः प्रणाल्या ऽपि येन क्रियते तत्करणं भवति यथा गोमयैः पचन्ति तुषपक्का भवन्तीति अनेन परिहृतम् । कथमनेनैतत्परिहृतम् । उच्यते । प्रत्यक्षो ऽपि यागस्य फलसाधनभावः क्षणिकस्य न साक्षात्सम्भवतीत्यानुमानिकापूर्वप्रणाल्या समाश्रीयते अनुमिते चापूर्वे न फलापूर्वयोः कश्चिद्विशेषः द्वयोरपि भाव्यत्वस्यावगतत्वात् । अनिर्ज्ञातोपायत्वाच्च । नात्र कश्चिद्धेतुरस्ति यदव्यवहितभाव्यमपूर्वमुल्लङ्घ्य फलं यावदितिकर्त्तव्यता गच्छेत् । एतेनाज्यौषधसान्नाय्यधर्म्माणां वाङ्नियमादीनां चावान्तरापूर्वप्रयुक्तिर्व्याख्याता । अतः सिद्धमवान्तरापूर्वभावनासम्बन्धाद् व्यवस्थिता एव धर्म्मा न पारिप्लवा इति । तेनानुपदिष्टधर्म्मकेष्वैन्द्राग्नादिष्वतिदेशेन धर्म्माः सिध्यन्तीत्येतत्साधनार्थं सप्तमादिकमारब्धव्यम् । तत्र सप्तमे प्रत्यक्षवचनेन नामधेयेन च सापवादो ऽतिदेशः कृत्स्नः साध्यः । आनुमानिकवचनेनातिदेशो ऽपि सामान्येन । तद्विशेषस्त्वष्टमे चिन्तितः । नवमे त्वतिदिष्टानां पदार्थानां दशमाद्यसाध्यं कार्य्यप्राधान्यं सिद्धं कृत्वा प्रयोगविशेषविचार ऊहाख्यः क्रियते यद्यपि चोहशब्दस्तर्कमात्रवचनः तथा ऽप्यस्मिन् शास्त्रे ऽन्यथा ऽवगतानां पदार्थानामन्यथाभावविषयो यस्तर्कः स ऊहशब्देनोच्यते । यद्यपि चात्रोपदेश एव चिन्त्यते । किं प्रकृतौ हन्तिपिषिप्रयुक्तं प्रोक्षणम् उतापूर्वप्रयुक्तम् । प्रवोवाजीयाप्रयुक्तं प्राथम्यप्रयुक्तं वा

त्रितम् । सवित्रादिशब्दाः समवेताभिधायिनो न वा यज्ञपति-शब्दः स्वार्थः परार्थो वा । अग्निस्वरूपप्रयुक्तं मन्त्रोच्चारणं देवताविशेषप्रयुक्तं वेति । तथा विकृतावप्यर्थान्तराणां नीवारनखावपनपरिधिमध्वशनादीनां पञ्चधा प्राकृतव्रीह्यादिकार्य्योपत्तिरुपदेशार्थ एव तथा ऽप्यष्टमानन्तरमेवास्य सङ्गतिः । न हि प्रकृतिमात्रालोचने प्रयुक्तिविशेषजिज्ञासा जायते कारणाभावात् । यदा तु विकृतावतिदिष्टा धर्म्मास्तदा कथमत्रैते प्रयोक्तव्या इति चिन्ता जायते तदुपायत्वेन च किंप्रयुक्ता एते प्रकृताविति जिज्ञासा तेनोपदेशविचारो ऽप्यतिदिष्टेष्वेव विशेषं फलतीति विशेषातिदेशानन्तरमारब्धः । तदुपोद्घाततया चापूर्वप्रयुक्तत्वं सप्तमाद्यसाधितं स्मारितम् । अथ वा ऽत्रैवैतत् साध्यते धर्म्मव्यवस्था तु यजिविशेषप्रयुक्तत्वे ऽप्युपपद्यतइत्युक्तम् । ऊहस्तु नापूर्वप्रयुक्तत्वमन्तरेण सिध्यतीति इह तत्साध्यते तत्र तु यजिमात्रप्रयुक्तत्वनिराकरणपरेण सता ऽत्रसमपूर्वप्रयुक्तत्वमुक्तम् । अथ वा तत्रारादुपकारिणाम् । इह सन्निपातिनां तत्प्रयुक्तत्वमभिधीयते । तत्र तु चोद्यनिराकरणमात्रार्थं सन्निपातिपरामर्शः । निमित्तमात्रं वा तत्र अत्र तु प्रयोजकं विचारितमित्यपुनरुक्तत्वम् । दशमाद्यसाध्यं चोपकारपुरोधानं पदार्थानामूहसिद्ध्यर्थमपेक्षितव्यम् । अन्यथा तदसम्भवात् । यदा ह्यनादृतोपकाराः पदार्थाः प्रकृताविव विकृतौ सम्बध्यन्ते तदा तद्वदेव यथाऽवस्थितानामेवाङ्गानां दृष्टमदृष्टं वा प्रयोजनं परिकल्प्य लक्षणया वा ऽविकृतानामेव प्रयोगः स्यात् । यदा तु यथा प्रकृतावुपकृतं तथा विकृतावित्युपकारः पूर्वं प्राप्तस्तथाविधश्चोपकारस्तैरेव पदार्थैर्ज्ञातोत्पत्तिरिति तत्सिद्ध्यर्थं तेषामतिदेशः पश्चाद्भवति । तदा येन यथोपकृतं तेन तथैवोपकर्त्तव्यमिति विकृतावप्यारादुपकारकाणां परमापूर्वोत्पत्तावदृष्टोपकारसाधन-

त्वं सन्निपातिनामपि स्वकारके दृष्टमदृष्टं वा कुर्वतां यागसामर्थ्यजननद्वारेणोत्पत्त्यपूर्वसाधनत्वम् । मन्त्राणामपि देवतादिप्रकाशनद्वारेणोपकारकत्वमिति तत्सिद्ध्यर्थम् ऊहः सन्निपातिनां मन्त्रसामसंस्काराणां सिद्धो भवति । न हि व्रीहिषु क्रियमाणं प्रोक्षणं नैवारचरोः प्राकृतमुपकारं साधयतीत्यूहितव्यम् । एवं साम्नामप्यृगन्तरसंचारे द्रष्टव्यम् । मन्त्राणामपि देवतान्तरद्रव्यान्तरवशां विकृतावविकृतानां प्रकृतिवदुपकारकत्वं न संभवतीति प्रातिपदिकलिङ्गवचनानामेकैकस्य द्वयोर्द्वयोर्वा समस्तानां वा ऽन्यथाभावात्तथाऽवस्थितानामेव वा ऽभ्यासादष्टधा ऽधिकार ऊहः सिध्यति । तदूहस्यापि कार्यप्राधान्यमपेक्षितव्यमिति द्वयोरप्यूहबाधयोस्साधारणं मध्ये समारब्धमिति वेदितव्यम् । दशमे बाधाभ्युच्चयद्वारेण विकृतिषु पदार्थेयत्ता चिन्त्यते । कथं पुनर्वचनप्राप्तस्य बाधो ऽध्यवसीयते । यथा चैतत्तथा वक्ष्यामः । प्रथमं तावदिदं तत्सिद्ध्यर्थं चिन्त्यते किं प्राकृतमङ्गजातमनादृतोपकारं स्वरूपेणैव विकृतावतिदिश्यते सौर्येण कुर्यात् कथम् । आग्नेयस्य स्वकार्यसाधने यः प्रकारः स सौर्यस्य स्यादित्यतिदिश्यते ततस्तत्सिद्ध्युपायत्वेनावान्तरापूर्वाणि प्रयाजादिजन्यानि प्रोक्षणजन्यं चादृष्टं जातिद्रव्यगुणावघातादिजन्यं च नियमादृष्टानुविद्धं दृष्टमतिदिश्यते ततस्तत्साधनभूताः पदार्थाः तेषां च तथाविधानामेव प्रतीत्युपायतया वचनान्यतिदिश्यन्तइति । तत्र पूर्वः पक्षः प्रकृतिवत्सर्वमेवाङ्गकाण्डं विकृतेरपि वाक्यशेषो भवति तेन तेषु सर्वेषु विहितेषु प्रकृतिवद्यथासम्भवं दृष्टमदृष्टं वा प्रयोजनं कल्प्यतइति नास्ति बाधः । यद्यपि न शास्त्रातिदेशः तथा ऽपि पदार्था एवातिदिश्यन्ते नोपकारः प्रकृतावुपकारस्य पदार्थपूर्वकत्वाद्विकृतावपि तत्पूर्विकैव तस्य प्रतीतिः । तत्र प्रथमप्रतिपन्नपदार्थातिक्रमेण न युक्तं जघन्यप्रति-

पन्न उपकारो ऽतिदिश्यतइति । तस्मात्पदार्थानामेव कार्य्य-निरपेक्षाणामतिदिष्टानामिहैव दृष्टादृष्टप्रयोजनकल्पनान्नास्ति बाध इति प्राप्ते ऽभिधीयते ।

प्रकारस्यातिदेशः स्यात्पूर्वं यस्मादपेक्षितः ।
ततो ऽवान्तरकार्याणामङ्गानां वचसां क्रमात् ॥१॥

यद्यपि प्रकृतावुपकारः शास्त्रपदार्थपूर्वक एव तथा ऽपि विकृतावतिदेशावस्थायां सर्वेषां शास्त्रपदार्थकार्याणां क्लृप्तत्वाविशेषे ऽपि कथंभावापेक्षा विकृतिभावनाप्रकारमेव प्रथमं स्वीकरोति न हि तस्याः शास्त्राणि पदार्था वा स्वरूपेणापेक्षिताः किं तु प्रकारः प्राकृतः स एव तावदङ्गीक्रियते स च पदार्थविशिष्टावान्तरकार्यविशिष्टो ऽतिदिष्टः सन् विशेषणानि चार्थात्प्रापयति तेन तत्सिद्ध्यर्थमवान्तरकार्याणि तदर्थं चाङ्गानि ततः शास्त्राणि । यद्यपि प्रथमावगताः पदार्थास्तथैवालोचयितव्यास्तथा ऽप्यनपेक्षितत्वात्पदार्थानुपेक्ष्य प्रकारमेव विकृतिर्गृह्णाति । तस्मात्तत्पुरस्सर एवातिदेशः तदतिदेशेन चार्थात्प्राप्यमाणेषु पदार्थेषु व्रीहीणां प्रत्यक्षश्रुतकृष्णलचरौ निर्वृत्तिः वितुषीकरणस्य च तेष्वसंभवान्निवृत्तिः तन्निवृत्तौ च तद्द्वारस्यावघातस्य निवृत्तिरिति तदतिरिक्तविशेषणयुक्तस्यैवोपकारस्यातिदेश इति ॥

प्रकृतस्योपकारस्य विकृतावुपदेशतः ।
अन्वयं कश्चिदाचष्टे पितृयज्ञे नियोज्यवत् ॥ २ ॥

उपदेशो हि ग्रन्थसन्दर्भः स चार्थान्तरान्वितं विध्यर्थं कार्यतया प्रतिपादयति । स तावत्तथाभूत एव औपदेशिकस्तेनापि यदपर्यवस्यता ऽऽक्षिप्यते तदप्यौपदेशिकमेव यथा पिण्डपितृयज्ञे नियोज्यः । यथा च प्रकृतावुपकारः तेन विकृतावपि

विध्यर्थकल्पितस्योपकारस्य भवत्यौपदेशिकत्वमिति कश्चित् तन्न युक्तम् ।

उपकारकभेदात्स्यादुपकारविशेषधीः ।
पूर्वमेव त्वपेक्षा स्यात्पदार्थेष्वपि सा समा ॥३॥

उपकारकपदार्थविशेषाधीनसिद्धिरुपकारविशेषो नानवधारितेषु तेषु विशेषरूपेण निरूपयितुं शक्यते । भवितव्यं हि केन चिदुपकारविशेषेणेत्यपेक्षामात्रमेव प्रथमं सिद्ध्यति । तच्च पदार्थेष्वपि भवितव्यमुपकारजनकैः पदार्थभेदैरित्यपेक्षासम्भवात्तुल्यमेव । अथोच्येत न विधिर्विशेषरूपेण पदार्थानाक्षेप्तुं प्रभवतीति वाक्यान्तरादिभिरतिदेशेन वा यागदानादिपदार्थभेदसमर्प्पणमपेक्षते । उपकारं तु विशेषरूपेणैवाक्षिपति । अयमेव हि तस्य विशेषाक्षेपः यदस्ति कश्चिदुपकार इति । न ह्यसौ पदार्थवदयमसाविति निरूप्येत तद्विधित एव कल्पितो ऽसावौपदेशिक इति । तथा ऽपि कथं प्राकृतस्योपकारविशेषस्यौपदेशिकत्वं तस्य हि नान्तरेण चोदकं विधिराक्षेपाय प्रभवति । सत्यं तथा ऽप्युपकारविशेषकल्पनायेशानो ऽपि लाघवात्प्राकृतं गृह्णाति तेन विध्याक्षेपस्यापि विशेषस्य नियममात्रं चोदकादिति ।

अत्राह । ननु चैवं सति दृष्टार्थानामवघातादीनां द्रव्यगुणादीनां च विधित एवानियमेनाक्षेपसंभवादतिदेशेन च नियममात्रालाभाद्व्रीह्यादीनामपि विकृतावुपदेशादेव संगतिः प्रसज्येत । अथ विधिना यत्साक्षादाक्षिप्यते तदौपदेशिकं यथा चोपकारः । तत्सिद्ध्यर्थं तु यत्पश्चादाक्षिप्यते द्रव्यादि न तदौपदेशिकमिति परिभाष्यते तथा सति विश्वजिद्यागस्य स्वर्गफलसाधनत्वं नौपदेशिकं स्यात् । विधिपरिकल्पितविशिष्टनियो-

ङ्यसम्बन्धकल्पितत्वात् । तस्मान्नोपकारस्योपदेशः सहवै तु पदार्थैरुपकारस्यातिदेश एव प्रमाणम् । तद्भावो ह्यतिदेशः । तेन यत्साक्षात्प्रणाल्या वा प्राप्यते तदातिदेशिकं तन्निरपेक्षमेव तु ग्रन्थसंदर्भमात्रेण श्रुत्यर्थाभ्यां प्रमितमौपदेशिकमिति विवेकः। यदप्युच्यते उपदिष्टस्याप्युपकारस्यान्यदीयस्यान्यत्रातिदेशादतिदिष्टत्वमप्यस्ति तेनोपदेशातिदेशयोरेकत्रैव युगपत्सम्भवान्नैतौ प्रतिपक्षभूतौ शब्दप्रमाणभेदौ अत एव नोपदेशातिदेशाश्रितौ षट्कौ किं तूपदेशकार्यान्वितौ कार्यमिति च पदार्थजन्यस्योपकारस्याभिधानं न नियोगस्य। अत एवोपादानाभिधानो विध्याक्षेपः पूर्वषट्के चिन्तितः विध्याक्षेप्यत्वादुत्पत्त्यादीनाम्। तन्त्रावापादि तु प्रकृतावप्युपकारप्रमेयमित्युत्तरषट्के निरूपितम् । अन्यथा ऽतिदेशविषयत्वे सति प्रयाजादीनामाग्नेयादिषु तन्त्रेणावृत्त्या वा ऽनुष्ठानमित्यादिविचारो नात्र संबध्येत तस्मान्नोपदेशातिदेशाश्रितं षट्कद्वयमपि तूपदेशकार्याश्रितमिति । तदप्युपकारस्योक्तेन न्यायेनौपदेशिकत्वासम्भवान्निरस्तम् । तथा हि उपदेशातिदेशावेव प्रमाणे तदाश्रितं च षट्कद्वयं भवति तथा सति कथमुपदिष्टार्थविषया तन्त्रावापादिचिन्ता । अन्यथा वा कथं सप्तमाष्टमयोर्वचननामधेयचोदनालिङ्गैरुपकारस्योपदेशप्रमेयस्य चिन्ता । सा हि विध्याक्षेपविषयत्वाच्चातुर्थिकी स्यात् पदार्थप्राप्तिसिद्ध्यर्थमिति ब्रूमः न ह्यसत्यामुपकारस्य प्राप्तौ तद्वशेन पदार्थानां प्राप्तिर्वर्णयितुं शक्यते । तेनोपोद्घातस्तद्विचारः पारिप्लवत्वनिराकरणवदिति । अस्मत्पक्षे ऽपि प्रासङ्गिकस्तन्त्रावापादिविचारः । दशमे हि पदार्थैयत्तायां निरूपितायां परिमाणप्रसङ्गेन तन्त्रावापप्रसङ्गाः प्रयोगपरिमाणरूपाश्चिन्त्यन्ते। उपदिष्टातिदिष्टपदार्थसाधारण्याच्च उभयोत्तरकालमेव तन्त्राद्यारम्भः । यद्यपि प्रयोगविशेषविचारात्मकत्वाच्चतुर्थपञ्चमसमीपे

ऽप्यारम्भसम्भवः तथा ऽपि परिमाणविचारात्मकत्वादत्राप्यारम्भः सम्भवतीति पर्यनुयोगाविशेषादत्राप्यारम्भः । यथा भवन्मते कार्यपदार्थयोरुपदेशकार्यप्रमेयत्वादुभयविचारात्मकयोस्सप्तमाष्टमयोरन्यतरांशेन चतुर्थोत्तरषट्कान्तर्भावादन्यतरत्रारम्भे कर्त्तव्ये सत्यविशेषादुत्तरषट्क एवारम्भः तथा ऽस्माकमपि तन्त्रादेरिति न दोषः । यच्चोपकारप्राप्तेः पश्चात्पदार्थाङ्गीकरणं तदपि व्यर्थं विशिष्टोपकारप्राप्त्यैवार्थात्पदार्थप्राप्तेः । न चेह सामान्यशास्त्रात्परतो विशेषशास्त्राणि कल्प्यन्ते । सर्वपदार्थसाधारणोपकारशास्त्रतः पश्चान्न पदार्थविशेषाणां शास्त्राणि सम्भवन्तीति । तत्सिद्धं कार्यद्वारेण पदार्थानां प्राप्तौ कार्याभावे बाध इति । एवं च यद्वचनप्राप्तस्य बाधो न युक्त इति तत्परिहृतं वचनस्यैव कार्यद्वारेण पदार्थान् प्रापयतस्तदभावे प्रापकत्वव्याघातात् । एतादृशं हि वचनं यथा ऽऽग्नेय उपकृतस्तथा सौर्यो ऽपीति । किं तद्येनोपकर्त्तव्यं समिदाद्यवान्तरकार्यम् । तदपि तैरेव समिदादिभिर्यथाप्रकृत्येव जनयितव्यमिति । एवं च सामान्यतः प्राप्तिमवगम्य तदनन्तरं पदार्थान्स्वरूपेणालोचयति अनेन कथमुपकृतमनेन कथमुपकृतमिति । तत्रावघातस्य दृष्टप्रयोजनद्वारेणोपकारकत्वं प्रकृतावालोच्य कृष्णलेषु तथाभावासम्भवात् पूर्वसंजातस्य सामान्यज्ञानस्य बाधं मन्यते । एवं प्रत्याम्नाने ऽपि कार्यद्वारेण पदार्थेषु प्राप्यमाणेषु बर्हिःकार्ये हविरासादने पूर्वं प्राप्तेः तत्साधनापेक्षायां यावच्चोदकेन कुशा न प्राप्यन्ते तावदेव प्रत्यक्षेण वाक्येन तदुद्देशेन शराणां विधानात्कुशबाधः । तथा प्रतिषेधे सामान्यरूपस्य चोदकस्य विषयविशेषादुत्कालनं "नार्षेयं वृणीतइति" । तस्माल्लुप्तार्थप्रत्याम्नातप्रतिषिद्धाङ्गेभ्यस्समुत्काल्यान्याङ्गेष्वेव चोदको व्यवस्थाप्यतइति सिद्धो बाधः ।

लुप्तार्थस्यापि हन्त्यादेः कृष्णलादिषु शेषता ।
अस्ति नास्ति त्वनुष्ठानमिति केचित्प्रचक्षते ॥४॥
प्राप्तबाधत्वसिद्ध्यर्थमन्यथा तन्न सिद्ध्यति ।
प्राप्तौ निवार्यमाणायां श्रुतिलिङ्गादिवद्भवेत् ॥५॥

तार्त्तीयो ह्यप्राप्तबाधः दाशमिकस्तु प्राप्तबाध इति स्थितिः। तत्र यदि चोदक एव लुप्तार्थानां नाश्रीयेत ततो हन्त्यादीनां प्राप्त्यभावात्प्राप्तबाधवाचोयुक्तिरयुक्ता स्यात् । श्रुतिलिङ्गादिवदप्राप्तबाध एव स्यात् । तस्माच्चोदकेन सर्वमेव प्राकृतमङ्गजातं प्राप्यते सत्यामेव तु प्राप्तौ कृष्णलादिषु हन्त्यादेः प्रयोजनाभावादननुष्ठानलक्षणो बाधो भवति । तथा शरमयं बर्हिरित्यत्रापि चोदकावगताबाधिताङ्गभावानां दर्भाणां प्रत्यक्षावगतशरनिराकाङ्क्षेण प्रयोगवचनेनानुपसंग्रहात्तल्लक्षण एव बाधः । तथा नार्षेयं वृणीतइत्यत्रापि प्रतिषेधस्यैव प्रयोगविधिसंग्रहाद्वरणस्य प्राप्तस्याप्यशक्यत्वादननुष्ठानम् । तस्मान्न कुतश्चिदपि चोदको निवार्यतइति सर्वमेव तेन प्रापितमपि प्रयोगविधिसंग्रहाभावाद्बाध्यतइत्युच्यते । युक्तं चैतत् । न हि प्रतिस्वं पदार्थानां चोदको ऽस्ति यदेकवर्जमितरत्प्राप्यते । उपकारसूत्रे हि प्राकृतं पदार्थरत्नजातं प्रोतं सर्वमेव तस्मिन्नाकृष्यमाणे समाकृष्यते तदनाकर्षणे वा न किं चिदपि । तदुक्तम् । तद्वर्जं तु वचनप्राप्तेः चोदनार्थकार्त्स्न्यादिति । किमिदानीं प्रमत्तगीतमिदं भाष्यं नास्ति लुप्तार्थानां चोदकवचनमिति । तस्मान्न लुप्तप्राकृतप्रयोजनं चोदकश्चोदयतीति च । तथा बाधो नाम यदेवमिदमिति विज्ञानं निश्चितं कारणान्तरेण मिथ्येति विकल्प्यतइति च । नेति ब्रूमः । मिथ्यात्वं तावदनुष्ठानाभिप्रायं व्यवहारविसंवादादेव हि सर्वसंविदां मिथ्यात्वं न त्वयाथार्थ्यात् । न ह्ययथार्थं नाम संवेदनं

सम्भवतीत्युक्तम् । यत्प्रत्यक्षं न तद्व्यभिचरति यद्व्यभिचरति न तत्प्रत्यक्षमित्यत्र शुक्तिकारजतादिष्वग्रहणाभिधानात् । तद्वदेव तर्ह्यग्रहणमस्तु । न । ग्रहणकारणसद्भावात् । युक्तं हि चक्षुरादीनां प्राप्यकारित्वादसन्निहितरजतप्राप्त्यसंभवादग्रहणम् । अत्र तु चोदकस्य ग्रहणकारणस्य सम्भवान्नाग्रहणसम्भवः । कथं तर्हि बाधः । उक्तं व्यवहारविसंवादादिति । तदेव तु न युक्तमिति पश्यामः । अग्रहणनिबन्धनो हि व्यवहारो ग्रहणेनाग्रहणे निवृत्ते परावर्त्तत इति युक्तं ग्रहणे तु सति कस्तन्निबन्धनं व्यवहारं परावर्त्तयेत् । उच्यते । अङ्गत्वमात्रं चोदकेनावगम्यते न च तावन्मात्रेणानुष्ठानम् । प्रयोगविध्युपसंग्रहनिमित्तत्वात्तस्य तेन च लुप्तार्थानामनुपसंग्रहाद्भवत्येवात्रापि व्यवहारविसंवादः ।

अन्यथा ज्ञानमप्यत्र चोदकान्नोपजायते ।
दुष्टकारणजं तत्स्याददुष्टश्चेह चोदकः ॥ ६ ॥

येषामप्ययथार्थं विज्ञानं मृगतोयादिविषयमुत्पन्नमेव ज्ञानान्तरेणार्थतत्त्वोपदर्शनेन मिथ्या क्रियत इति मतं ते ऽपि मिथ्याज्ञानस्य दुष्टकारणजत्वाच्चोदकस्यादुष्टत्वात्तज्जनितं यत्पदार्थप्राप्तिज्ञानम् ।

नार्थलोपादिना तस्य मिथ्यात्वं वदितुं क्षमाः ।
अननुष्ठानमेवात्र बाधो ऽङ्गानां सतामपि ॥ ७ ॥

तेन चोदकप्राप्तानामपि तत्फलस्यानुष्ठानस्याभावान्नास्ति चोदकवचनं न चोदकश्चोदयतीति च फलद्वारेण व्याख्यातमिति । अत्र ब्रूमः ।

चोदकेन पदार्थानां विकृतौ संगतिः कथम् ।
किं कार्यनिरपेक्षाणां तद्द्वारेणाथ वा भवेत् ॥ ८ ॥

संगतौ निरपेक्षाणां कल्पयित्वा प्रयोजनम् ।
प्रकृतौ वा प्रयोगः स्यांद्विकृतौ बाधनं कुतः ॥ ९ ॥
बाधो ऽधिकरणस्य स्यात्तादृशी संगतिर्यदि ।
कार्यद्वारेण चेत्प्राप्तिस्तल्लोपे वा कथं भवेत् ॥ १० ॥

यो हि चोदकप्राप्तानामबाधिताङ्गभावानामेवाङ्गानामननुष्ठानं बाधमातिष्ठते स विकल्प्य प्रष्टव्यः किं प्राकृतकार्यनिरपेक्षस्यैव हन्त्यादेः कृष्णलादिषु चोदकेनाङ्गत्वप्राप्तिः अथ वा तद्वारेणेति। स चेद्ब्रूयात्तन्नैरपेक्ष्येणैव विकृत्या संगतिरिति । प्रतिब्रूयादेनम्। तथा सति चोदकावगताङ्गभावानां तदुपपत्त्यर्थं दृष्टमदृष्टं वा प्रयोजनं परिकल्प्य प्रकृताविव विकृतावपि कृष्णलादौ हन्त्यादीनां प्रयोगात् नाननुष्ठानलक्षणबाधासिद्धिः । दशमाद्यधिकरणबाधश्च कार्यनिरपेक्षाणां प्राप्तौ प्रसज्येत । स चेदेतद्दोषपरिहारार्थं द्वितीयं पक्षमवलम्ब्य ब्रूयात्कार्यद्वारेणैवाङ्गानां प्राप्तिर्न स्वतन्त्राणामिति प्रतिब्रूयादेनं न तर्हि कृष्णलेषु हन्तेः प्राप्तिः संभवति द्वाराभावात् यत्र हि यस्य द्वारं नास्ति स तत्र तेनैव द्वारेण प्रविशतीति कुत एतत् । नो खल्वार्द्रतया ज्वलनमकुर्वन्ति काष्ठानि तद्द्वारेणौदनसिद्धेस्साधनभावमनुभवितुं प्रभवन्ति । तत्र प्राकृतेन द्वारेण कृष्णलापूर्वस्य हन्तिरङ्गमिति वचनमशक्यार्थविधित्वादप्रमाणं स्यादिति । तत्रैतत्स्यात् ।

उपकारस्तु सर्वाङ्गजन्यः पूर्वं प्रदिश्यते ।
ततो ऽवान्तरकार्याणां नाङ्गानामतिदेशनम् ॥ ११ ॥

न ब्रूमः कार्यानपेक्षः पदार्थातिदेश इति सर्वाङ्गजन्य उपकारः पूर्वमतिदिश्यतएव तदनन्तरं तु नावान्तरकार्याणामतिदेशः । किं त्वङ्गानामेव स चोपकारः कृष्णलेष्वपि विद्यतएव

तीत्सिद्ध्युपायत्वेनैव पदार्थानामतिदेशान्नास्त्यप्राप्तिः । एवमुपकारपृष्ठेन पदार्थानामङ्गभावे ऽपूर्वे प्रसवगते तदुपकारजनकत्वं तेषां प्रकृतावेव ज्ञातप्रकारमिति न प्रकारान्तरकल्पनावसरः । न चावघातस्यात्र तथा तज्जनकत्वं सम्भवतीत्यननुष्ठानम् । तस्मादुभयमप्युपपन्नं प्राप्तिरनुष्ठानं चेति । अधिकरणमप्युपकारानपेक्षपदार्थप्राप्त्यनभ्युपगमादक्षतमिति ॥

तदेतदपि पूर्वोक्तदूषणं नातिवर्त्तते ।
शेषभावे प्रतीते हि द्वारकार्यानपेक्षया ॥ १२ ॥
प्राकृतस्योपकारस्य प्रकारान्तरमास्थितः ।
हन्त्यादिहेतुतां गच्छेदपूर्वाङ्गत्वदेव नः ॥ १३ ॥

यद्यपि परमोपकारपुरस्सर एवाङ्गानामतिदेशः तथा ऽप्यवान्तरकार्यनिरपेक्षाणामेवाङ्गभावावगमात्तस्य च करणोपकारसाधनमन्तरेणाघटनात्तस्य च प्रकृसत्रगतेन मार्गेणासम्भवात्प्रकारान्तरेणापि तत्साधनत्वमवघातादीनामपूर्वाणामिवामनहोमादीनामङ्गानां परिकल्प्यानुष्ठानं स्यात् । किं च उपकारजनकापेक्षया ऽपि पदार्थानां पृथगतिदेशं भवानिच्छति तेषां च न प्रथममुपकारेणान्वयः न ह्युपकाराभिधायी शब्दो ऽस्ति यः पदार्थैरन्वितमुपकारमभिदध्यात् । न च पदार्थवाचिनो ऽपि शब्दा विकृतौ सन्ति ये पदार्थानुपकारान्वितानभिदध्युः । तेनापूर्वस्यैव स्वशब्देन पदार्थप्रयोजनतया ऽन्वितस्याभिधानात्तत्सिद्धये कल्पयित्वा ऽपि द्वारमनुष्ठानं स्यात् । एवं च यद्यप्युपकारानन्तरमवान्तरकार्याणि ततः पदार्थाः प्राप्यन्ते तथा ऽपि तेषामशब्दतया मिथस्सम्बन्धाभावादपूर्वेणैव तादर्थ्यान्वयाल्लुप्तद्वाराणामपि तत्कल्पनया स्यादेवानुष्ठानम् । यद्युच्येत

नावश्यंभाव्युपकारसाधनत्वमङ्गानां तेनोपकारसाधनत्वं न कल्पयितव्यमिति । प्रकृतौ तर्हि कथमुपकारकल्पना । अपेक्षितत्वात् । प्रधानस्य ह्युपकारापेक्षा तेन प्रकृतौ शेषाणां तज्जनकत्वं कल्प्यते । विकृतौ त्वलुप्तार्थाङ्गजातजनितेनैवोपकारेण प्रधानस्य नैराकाङ्क्ष्यान्नास्त्युपकारकत्वपरिकल्पनं लुप्तार्थानामिति । नैतत्सारम् । न ह्यनुपकारिणामप्यङ्गत्वे सत्येव प्रधानापेक्षानिबन्धनं तज्जनकत्वपरिकल्पनं तर्हि लब्धप्राकृतोपकारासु विकृतिषु तदपेक्षाभावादपूर्वाणामपि आमनहोमादीनामवघातादिवत्तज्जनकत्वपरिकल्पनाहेत्वभावादनुपकारकत्वेन नानुष्ठानं सिद्ध्येत् । अथ तेषां वचनानर्थक्यभयादनुष्ठानं चोदकस्य तु नानर्थक्यमङ्गान्तरेष्वपि कृतार्थत्वादित्युच्यते तदयुक्तम् । अत्राप्यानर्थक्यात् । न हि सर्वपदार्थसाधारणोपकारप्राप्त्यैवार्थात्पदार्थप्राप्तिरभिमता पुनरपि शास्त्रेणैव पदार्थानां विधेरिष्टत्वात्तेषां च सामान्यरूपाभावात्प्रत्येकमतिदेशादवघातस्यापि शास्त्रमननुष्ठाने ऽनर्थकं स्यात् । अतस्तस्यानतिदेशो वा ऽनुष्ठानं वा नान्या गतिरस्ति । काममनर्थकं भवतु नैतावता ऽनवगतो ऽर्थः शक्यते कल्पयितुं न ह्यत्र किं चिदुपकारजनकत्वे प्रमाणमस्ति । नन्वङ्गत्वानुपपत्तिरेव प्रमाणं न ह्यनुपकारिणस्तद्भवति हन्तेस्तु प्रकृतिवद्वचनादन्यथोपकारकत्वं न सम्भवति ।[1] तस्मादननुष्ठानमिति चेत् तदुक्तोत्तरम् । प्रकृतिवदङ्गत्वमवघातस्य कृष्णलेषु विदधद्वचनमप्रमाणं स्यादिति । किं च प्राप्त्यबाधे कुशानामलुप्तार्थानां किमित्यनुष्ठानं प्रत्याम्नानादिति चेत् न । तेनाप्यङ्गत्वानवलोपात् तेनाबाधिताङ्गभावयोः कुशशरयोर्विकल्पेनानुष्ठानमैकार्थ्यात्स्यान्न बाधः । नन्वतुल्यबलयोरुपदेशातिदेशयोः

१ तथोपकारकत्वं चार्थलोपान्न संभवति इत्यधिकः २ पु. पाठः ।

कथं विकल्पः । किं वोपदेशेनातिदेशो बाध्यतामित्युच्यते । ओमिति चेत् । न तर्हि कुशानामङ्गत्वमस्ति तत्प्रमाणस्यातिदेशस्य बाधितत्वात् । अथ नातिदेशस्य बाधो नापि विकल्पः । अथ किं समुच्चयः सो ऽपि न । ऐकार्थ्यात् । कथं तर्ह्युक्तं प्रयोगवचनेनानुपसंग्रहादननुष्ठानामिति । तदेव तु न युक्तमङ्गत्वाबाधादिति ब्रूमः । कः खल्वङ्गभूतयोरुपकारसाधनयोः कुशशरयोर्विशेषः येन द्वितीयस्यामिव शरेषु कापुरुषस्य विधेरनुरागो भवेत् । अयमस्ति विशेषः शराणां प्रत्यक्षवचनं प्रमाणम् इतरेषामनुमानमिति । नायं विशेषः प्रत्यक्षेणाप्यनुमानस्याबाधितत्वात् । प्रमाणयोर्हि प्राबल्यदौर्बल्याभ्यामन्यतरस्य प्रमेयापहारान्मिथ्यात्वं भवति प्रमेयानपहारे तु द्वयोरप्यर्थयोः कार्यसाधनत्वाविशेषादविशिष्टं कार्यनिमित्तमनुष्ठानमिति । विधिर्हि साध्यभूतः साधनेष्वनुष्ठानमाक्षिपति साधनत्वं च द्वयोरपि कुशशरयोरङ्गत्वाविशेषाद् द्वारसंभवाच्चाविशिष्टमिति नानुष्ठानाक्षेपे कश्चिद्विशेषः । तस्मादुभयस्यानुष्ठानान्नास्त्यननुष्ठानलक्षणो बाधः । तथा नार्षेयं वृणीतइत्यत्र प्रतिषेधपक्षे विकल्पमभ्युपेत्य तत्परिहाराय पर्युदास एव चोदकस्याश्रितः । यद्युच्यते ऽनारभ्य विधेः सामान्यरूपस्योपदेशात्मकस्य तत्र पर्युदासो ऽभिहितः नातिदेशस्येति । कथं तर्हि प्रदेशग्रहणम् । न्यायविरोधादनादरणीयमिति चेत् । अहो बत महामोहसमाश्रयणं भवतः यदात्मीयमज्ञानमृषावारोपयति न ह्यङ्गत्वाबाधे सत्युपदिष्टमतिदिष्टमित्यनेन कश्चिद्विशेष इत्युक्तम् । यदि चानपहृतयोरपि प्रमेययोरिदं प्रबलप्रमितमिदं दुर्बलप्रमितमित्यनेन विशेषेणानुष्ठानाननुष्ठाने भवतः ततो दूराद्वह्निमध्यक्षयन्नाराच्चानुमिमानो ऽनुमितं हित्वा पाकार्थी दूरस्थमुपधावेत् । तथा यजतिषु येयजामहं करोतीत्यस्य सामान्यविधेर्नानुयाजेषु येयजामहं करो-

तीयतो विशेषप्रतिषेधादाहवनीयशास्त्रस्यैव विशेषशास्त्रात्पदविधायिनो दुर्बलत्वात्प्रतिषेधे सत्यप्यननुष्ठानं येयजामहस्यानुयाजेषु शक्यते वक्तुमित्यनर्थकं पर्युदासप्रतिपादनं स्यात् । तस्मान्न कथं चिदपि प्राप्त्यबाधे सत्यननुष्ठानं संभवतीति प्राप्तिरेव बाधयितव्या । यत्त्वेवं सति प्राप्तबाधाभिधानमनुपपन्नं तार्त्तीयदाशमिकयोरविशेषादिति । अत्राभिधीयते ।

साधारणस्य शास्त्रस्य विशेषविषयादिना ।
संकोचः क्लृप्तरूपस्य प्राप्तबाधो ऽभिधीयते ॥१४॥
कल्प्यस्य शास्त्रस्य तु कल्पनं यन्निरुध्यते मूलनिकृन्तनेन ।
क्लृप्तेन शीघ्रेण फलापहारादप्राप्तबाधं तमुदाहरन्ति॥१५॥

यत्र क्लृप्तस्यैव शास्त्रस्य सामान्यद्वारेण विशेषानुपसर्पतः क चिद्विशेषयागा[1]दिना प्राप्तिरपोह्यते तत्र प्राप्तबाधः । यथा प्राकृतवैकृतसामान्यविशेषनित्यनैमित्तिकक्रत्वर्थपुरुषार्थपौर्वापर्याल्पभूयस्त्वसावकाशनिरवकाशाङ्गप्रधानतद्धर्म्मबाधेषु । प्राकृता हि धर्म्मा न प्रातिस्विकेन रूपेण चोदकेन विकृतौ प्राप्यन्ते इदमिदं कर्त्तव्यमिति । कथं तर्हि यथा प्रकृत्या स्वकार्यं साधितं तथा विकृत्या ऽपीति । तथाभावश्च तैरेव पदार्थैस्तथा संबध्यमानैः संपादयितुं शक्यते नान्यथेति । तेषां तत्साधनत्वसामान्यरूपेण प्राप्तिरविशेषेण प्रतीयते । सेयं प्रतीतिरविशेषेणोपजाता सती पश्चात्तत्तत्पदार्थविशेषनिरूपणावसरे हन्त्यादेस्तथा साधनभावासम्भवपर्यालोचनेन भ्रान्तीक्रियते । न चैतावता शास्त्रस्याप्रामाण्यं तस्य विषयविशेषपरिशेषमात्रपरिकल्पनात् । विशेषादर्शनेन हि सामान्यमात्रालोचनात्सर्वविषयत्वं शास्त्रस्य भ्रान्त्या ऽवगम्यते । तद्दर्शनात्तु नायमस्य विषयो ऽन्यविषयमेव

[1] विशेषविषयादिनेति २ पु. पा. ।

तु शास्त्रं सामान्यमात्रपर्यालोचनादोषादेतद्विषयत्वेन भ्रान्त्या ऽध्यवसितमिति मन्यते तेनार्थलोपात्प्रत्याम्नानात्प्रतिषेधाच्च चोदकसंकोचः । तथा आहवनीयविधायिनः सामान्यशास्त्रस्य पदविधायिना विशेषशास्त्रेण होमान्तरविषयत्वकल्पनम् । पाञ्चदश्यस्य नित्यस्याविशेषविहितस्य वैश्यविषयेण नैमित्तिकेन साप्तदश्येन वर्णान्तरविषयत्वम् । साप्तदश्यस्यापि क्रत्वर्थस्य पुरुषार्थेनैकविंशाद्यनुवचनेन प्रतिष्ठाकामव्यतिरिक्तवैश्यविषयत्वम् । न चात्र सामान्यविशेषभाव उभयोरपि सामान्यत्वात् । एकविंशत्यनुवचनं हि प्रतिष्ठाकामवर्णत्रयसाधारणं साप्तदश्यमपि प्रतिष्ठाकामातत्कामवैश्यसाधारणं प्रतिष्ठाकामे तु वैश्ये द्वयोस्सन्निपाते सति पुरुषार्थानुवचनेन क्रत्वर्थस्य प्रत्यासन्नफलेनान्यादृशस्य बाधः । तथा पौर्वापर्ये ऽपि चोद्गातृप्रतिहर्त्रपच्छेदयोः सामान्यविशेषभेदाभावात्पौर्वापर्य्यवशादेव मिथो बाधः । तत्रैवं शास्त्रार्थो भवति पश्चाद्भाव्युद्गात्रपच्छेदविधुरप्रतिहर्त्रपच्छेदवतः क्रतोः सर्ववेदसदानमङ्गमिति एवमुद्गात्रपच्छेदे ऽपि द्रष्टव्यम् । तथा पञ्चदशरात्रे प्रथमे ऽहन्यग्निष्टुन्नामधेये एकाहाग्निष्टुद्धर्म्मेषु प्राप्तेषु सुब्रह्मण्या ऽऽग्नेयी प्राप्ता उत्तरेषां चतुर्दशानामन्हामैन्द्री तत्राल्पवैगुण्येनापि गतौ सत्यां भूयोवैगुण्यमन्याय्यमिति भूयस्त्वेन प्रथमावगता ऽप्याग्नेयी बाध्यते । तेनाग्निष्टुन्नामधेयं सुब्रह्मण्याग्नेयीव्यतिरिक्ताङ्गातिदेशपरं भवति । तथा यत्किं चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीत्यस्य यावत्या वाचा कामयेत तावत्या वाचा दीक्षणीयायामनुब्रूयादित्यनेन दीक्षणीयादिप्रधानेषु स्वरान्तरविधानादन्यविषयत्वम् । न चास्य सामान्यात्मता यत्किचिच्छब्दस्य प्रकृतविशेषाभिधायित्वात् । तेन सावकाशनिरवकाशत्वेनात्र बाधः । तथोपांशु यजुषेति विहितं यजुरङ्गमुपांशुत्वं निगदेषु प्रधानभूतपर-

प्रस्तायनकार्याविरोधाद्बाध्यते तेन यजुःषूपांशुत्वविधानं निगद-व्यतिरिक्तयजुर्विषयं भवति। तथा य इष्ट्या पशुना सोमेन वा यजेत सो ऽमावास्यायां पौर्णमास्यां वेत्यनेनेष्टिषु पशौ सोमे च पर्वणि प्राप्ते सप्तेकादिदीक्षापक्षे सुत्यादीक्षणीययोरुभयोरपि पर्वसंपादनासंभवादन्यतरस्य बाधे कर्त्तव्ये सति प्रधानस्यावै-गुण्याद्दीक्षणीयायां पर्वबाधः तेनेष्टिषु पर्वविधानं प्रधानकाला-विरोधिविषयं भवति। तदेवं सर्वत्र विद्यमानस्य प्रापकस्य शास्त्रस्याविशेषेण प्रापकत्वे प्राप्ते क चिद्विशेषे यः प्रापकत्वाप-वादः स प्राप्तबाधः। यत्र तु कल्पनीयस्यालब्धात्मकस्य शास्त्रस्य कल्पनाभिमुखस्य शीघ्रेण तद्विषयापहारात्कल्पनामूलं निकृत्य तन्निरोधः क्रियते तत्राप्राप्तबाधो यथा श्रुतिलिङ्गादिषु। न ह्यैन्द्र्येन्द्रमुपतिष्ठतइति शास्त्रमस्ति यस्य प्राप्तस्यैन्द्र्या गार्हप-त्यमुपतिष्ठतइत्यनेन बाधः स्यान्न हि लिङ्गमात्रं स्वत एव प्रमाणं तत्कल्पिता तु श्रुतिरत्र प्रमाणं तत्कल्पनायामपि न तन्मात्रं प्रमाणं किं तु।

मन्त्राकाङ्क्षासनाथं तत्प्रमाणं श्रुतिकल्पने।
तां चान्यत्र नियोगेन प्रत्यक्षा कृन्तति श्रुतिः॥१६॥

तेन प्रत्यक्षेण शास्त्रेण साकाङ्क्षमन्त्रलिङ्गकल्प्यश्रुतिविषयं मन्त्रमपहृत्य गार्हपत्योपस्थाने विनियुज्य मन्त्रं निराकाङ्क्षीकुर्वता कल्पनामूलभूता ऽऽकाङ्क्षा निराकृतेति न तदधीनात्मलाभा श्रुतिरुन्मज्जितुं क्षमते। एवमन्यत्राप्यप्राप्तबाधो द्रष्टव्यः। तदु-पपन्नः प्राप्ताप्राप्तबाधविवेकः। प्रत्युतैकदेशिमतएव प्राप्तबाधा-नुपपत्तिः। न हि तस्य किं चित्प्राप्तं बाध्यते अङ्गत्वं हि प्राप्तं न तद्बाध्यते यत्त्वनुष्ठानं बाध्यते न तत्प्राप्तमिति न प्राप्तबाध-संभवस्तस्माद्यथोक्तमेव न्याय्यम्। यत्तु कृत्स्नप्रापी चोदको न किं चिद्वर्जयितुमर्हतीति। सत्यमयमेवास्य स्वभावः स तु स्व-

भावः प्रबलेन हेतुना प्रतिबध्यते सामान्यशास्त्रस्येव विशेषशास्त्रेण तद्वर्जन्तु वचनप्राप्तेर्न चोदकार्थकात्स्न्यादिरपि स्वभावत एव कतिपयविषयत्वमाशङ्क्य निराकृतमिति वेदितव्यम् । यद्यपि चात्र न कारणदोषेण मिथ्यात्वं सामान्यशास्त्रज्ञानस्योपलक्षयितुं शक्यते तथा ऽपि बाधकेन प्रत्ययान्तरेण तदुपलक्षणं भवति द्वयमपि हि तदुपलक्षणत्वेनोक्तं "यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः सो ऽसमीचीनः प्रत्यय" इति । तत्र वैदिकेषु सम्भवात् बाधकप्रत्यय एव तदुपलक्षणं न करणदोषज्ञानमसम्भवात् । आह च । "यत्तु कारणदोषज्ञानं द्वितीयमुपलक्षणमुक्तं तल्लोकविषयत्वान्न वेदे सम्भवतीति नोपन्यस्तमि"ति । कथं पुनरदुष्टेन करणेन मिथ्याज्ञानं जन्यते न हि बाधकेन मिथ्याज्ञानं जायते जातस्य तु मिथ्यात्वमसौ ज्ञापयति । तज्जन्म तु कारणदोषादेव । सत्यमेव तत् । अत्रापि हि कारणदोषो विद्यतएव यद्यप्यसावपौरुषेयस्य वेदस्य न स्वगतः कश्चिद्दोषो विद्यते तथा ऽपि प्रतिपत्तुरेव सामान्यापहृतबुद्धित्वादपवादानिरूपणाच्च न्यायाभासेभ्यः प्रसरन्मिथ्याज्ञानं जायते । अत एव सम्यक् न्यायनिरूपणार्थं मीमांसाशास्त्रमर्थवद्भवति न चायं दोषो बाधकात्प्रागङ्गुल्यवष्टम्भादिव निरूपयितुं शक्यतइति बाधकैकोपलक्षणीयत्वं मिथ्यात्वस्याभिहितमिति सर्वमवदातम् । तत्सिद्धं यदेवमिदमिति निश्चितं ज्ञानं कारणान्तरेण मिथ्येति कथ्यते नास्ति लुप्तार्थानां चोदकवचनम् । लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयतीत्यादिभाष्याविनाशात् । अपि तु वाक्यशेषः स्यादिति च सूत्राविनाशाल्लुप्तार्थप्रत्याम्नातप्रतिषिद्धेभ्यो ऽङ्गेभ्यश्चोदकस्य समुत्कालनम् ।

कृष्णलादिषु हन्त्यादेरनङ्गत्वं तथा क्रिया ।
नियमाद्दृष्टसिद्धिस्तु नियमान्न स्वरूपतः ॥१७॥

तत्रैतत्स्यात् । यद्यपि कृष्णलेषु हन्तिर्दृष्टार्थं न प्राप्यते तथा ऽपि नियमादृष्टसिद्ध्यर्थं किन्न प्राप्यतइति । तन्न । तत्र तस्यासम्भवात् । एवं हि तत्कल्प्यते अवघातेनैव निष्पाद्यमानास्तण्डुला अपूर्वं साधयन्तीति न चैवमिह सम्भवतीति । अप्रयोजकत्वाच्च । न ह्यवघातस्य नियमादृष्टं प्रयोजकं दृष्टप्रयोजनेनैव तावत्स्वरूपे प्राप्ते नियममात्रं तेन प्रयुज्यते । तेन यद्यपि चरुषु पेषणमप्रतिषिद्धं पिष्टस्यापि चरुत्वाविघातात् तथा ऽपि प्रयोजनाभावात्पेषणस्वरूपस्याप्राप्तेस्तदधीनत्वाच्च नियमप्रयुक्तेरननुष्ठानम् । सत्यपि च प्रयोजने प्रयोजकाभावात्पुरोडाशकपालादेश्चर्वादिषु बाध इति । एतेन चित्रेष्ट्यां तण्डुलेषु प्राकृतस्य व्रीहियवप्रकृतिद्रव्यनियमस्य बाधो व्याख्यातः । तथा हि ।

प्राप्ते प्रकृत्युपादाने नियमो ऽत्र विधीयते ।
लौकिका एव तु ग्राह्यास्तण्डुलाः प्रकृतिर्न तु ॥१८॥

न हि प्रकृतौ व्रैहेयेण हविषा यजेतेति शास्त्रमस्ति यदतिदेशात्तण्डुलानामपि तन्मयत्वं स्यात् । यागं प्रति व्रीहिभिर्यजेतेति व्रीहीणां करणत्वं श्रूयते कर्त्तृव्यापारगोचरश्च करणं भवति । यथा ऽऽहुः ।

"करणं खलु सर्वत्र कर्त्तृव्यापारगोचर" इति ।

तेन व्रीहीनुपादाय तैर्यष्टव्यमिति । करणत्वं च तेषामुत्पत्तिशिष्टपुरोडाशावरुद्धे यागे तत्प्रकृतित्वेन सम्भवतीत्येष शास्त्रार्थो व्रीहीनुपादाय तैर्हविः संपाद्य यजेतेति । अत्र च हविः संपाद्य यजेतेत्यनूद्य व्रीहिभिरित्येतावन्मात्रं विधीयते । एवं च सत्यार्थिकं हविषस्तन्मयत्वं न श्रौतम् । न चैवं तण्डुलेषु संभवति न हि तत्र प्रकृत्युपादानेन हविस्संपादनीयं प्राप्तं यत् व्रीहिभिरिति नियम्येत लोकसिद्धानेव तण्डुलानुपादाय यष्टुं शक्य-

त्वात् । ननु प्रकृतावपि लौकिकमेव पुरोडाशमादाय यागस्य कर्त्तुं शक्यत्वात्कथं प्रकृत्युपादानेन हविस्संपादनप्राप्तिरिति चेत् । तदुच्यते ।

हविःश्रपणसाध्यं हि पुरोडाशाख्यमिष्यते ।
स्वयंकर्त्तृकता तस्य श्रपणस्य विधीयते ॥१९॥

पुरोडाशरूपं हि हविर्नान्तरेण श्रपणं सिध्यति तत्किं लौकिकमेवोपादेयं स्वयमेव वा प्रकृत्युपादानेन संपादयितव्यमिति यद्यप्युत्पत्तिवाक्यादनियमः प्राप्तः अष्टाकपालेन यजेतेत्यस्योभयथा ऽप्युपपत्तेस्तथा ऽपि कपालेषु श्रपयतीति वचनान्नान्येन श्रपितं गृह्णातीति स्वयंकर्त्तृकत्वमेव त्वस्य विधेयं सर्वमन्यदुत्पत्तिवाक्यसामर्थ्यसिद्धम् । कपालान्युत्पत्तिवाक्यसिद्धानि श्रपणमपि सामर्थ्यान्नाश्रपितस्य पुरोडाशत्वमस्तीति श्रपितद्रव्यविशेषवचनत्वात्पुरोडाशचर्वादिशब्दानाम् । ततः स्वयंकर्त्तृकतैवात्र विधेया । यथा ऽऽह भगवान् भाष्यकारः । "कपालेषु श्रपयतीति वचनान्नान्येन श्रपितं गृह्णातीति तद्बलेन प्रकृत्युपादानं प्राप्नोती"ति न ह्यन्यथा स्वयं श्रपयितुं शक्यते एवं प्रकृतिद्रव्योपादाने प्राप्ते किमवस्थं किंरूपं च द्रव्यमुपादेयमित्याकाङ्क्षायां व्रीहिशब्देन सतुषजातिविशेषवाचिना तन्नियमात्पिष्टतण्डुलावस्थयोर्नीवारादीनां च निवृत्तिः । यदि त्वनेनैव शास्त्रेण प्रकृतिमुपादाय हविस्संपादयेत्तच्च व्रीहिभिरिति विधीयते ततो गौरवम् । कपालेषु श्रपयतीति च विधेरानर्थक्यं सत्यां गतौ स्यात् तच्चान्याय्यं तेन यत्र श्रपणं तत्र तस्य स्वयंकर्त्तृकत्वं यत्र च तत्तत्र प्रकृत्युपादानप्राप्तिः यत्र चासौ तत्र व्रीहिनियमः । तण्डुलेषु तु श्रपणस्यार्थलोपान्निवृत्तिः । निवृत्ते च तस्मिंस्तत्र स्वयंकर्त्तृकत्वस्य कुतः प्राप्तिः कुतस्तरां च प्रकृत्यु-

पादानं कुतस्तमां च व्रीहिनियम इति न तेषु व्रीहिनियमसंभवः। नन्ववघातसामर्थ्यात्तण्डुलेष्वपि प्रकृत्युपादानं स्यात् । नेत्याह । न हि व्रीहीनवहन्तीत्येतदवघातस्य स्वयंकर्तृकत्वसिद्ध्यर्थमप्राप्तत्वाद्व्रीह्युद्देशेनावघातो विधीयतइति न तद्वशेन प्रकृतिद्रव्यप्राप्तिः शक्यते वदितुम् । न चासौ श्रपणवन्नियमेन प्राप्नोति यत्तदनुवादेन स्वयंकर्तृकता विधीयेत स्वयमेवावहन्यान्नान्येनावहतान् गृह्णीयादिति नखनिर्लुञ्चनादिभ्यो ऽपि वितुषीकरणसम्भवात् । एतेन पेषणं व्याख्यातम् । तस्यापि नियमेनाप्राप्तेः अवघातेनापि हि विक्लिन्नास्तण्डुलाश्चूर्णीभवन्ति । तदेवं क्रमः प्रथमं तावत्पुरोडाशो विनियुज्यते ततस्तस्य यथाकथंचिदुपादाने प्राप्ते श्रपणविधिवशात्प्रकृत्युपादानेन स्वयं संपादनं ततः प्रकृतिविशेषापेक्षायां व्रीहिभिर्यजेतेत्यनेनानन्तरतत्प्रकृतिपिष्टव्युदासेन पिष्टव्यवहिततण्डुलव्युदासेन व्यवहिततरनीवारादिव्युदासेन च व्रीहयो विधीयन्ते ततस्तैः कथं हविरुत्पाद्यमित्यपेक्षायामवघातपेषणादिविधानम् । तण्डुलेषु त्वर्थलोपात् श्रपणनिवृत्तौ तन्मूलप्रकृत्युपादानव्रीहिनियमावघातादीनां क्रमेण निवृत्तिरिति लोकसिद्धा एव यत्किंचिज्जातीयकावरकादिवर्जमुपादेयाः यत्र त्वपुरोडाशे ऽपि श्रपणेनार्थश्चरुधानामन्थलाजपृथुकयवाग्वादिषु तत्र भवत्येव व्रीहिनियमो ऽवघातादयश्च संस्कारा इति सूक्ष्ममिदं न्यायरत्नं भाष्यवार्त्तिकपरिचयोपचितचेतोलोचनसंस्कारैर्विवेक्तुं शक्यते न स्थूलदृष्टिभिरिति । श्लोकावप्यत्र वार्त्तिककारीया गायन्ति ।

"तण्डुलेभ्यो ऽर्थलोपेन श्रपणं चेन्निवर्त्तते ।
श्रपणस्य निवृत्तस्य स्वयंकर्तृकता कथम् ॥
तदधीनमुपादानं प्रकृतेः स्यात्कथंतराम् ।
तद्वशो व्रीहिनियमस्तदभावे कथंतमामि"ति ॥

तदेवं प्राकृतानामर्थलोपादिना बाधाद्वैकृतकार्यापत्तिशून्यानामामनहोमादीनामभ्युच्चयाभिधानाच्च प्रयोगेयत्ता दशमे चिन्तितेति ॥

इति श्रीन्यायरत्नमालायामङ्गनिर्णये चतुर्थः परिच्छेदः ॥४॥

एकादशे तु प्रयोगपरिमाणं तन्त्रावापद्वारेण चिन्त्यते । तन्त्रं नाम साधारणमङ्गाद्यनुष्ठानं यथा ऽऽग्नेयादिषु प्रयाजादीनाम् । तत्र प्रथमं तावदाग्नेयादीनां फलतन्त्रत्वं प्रतिपाद्यते । किं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येतत्फलमाग्नेयादीनां तन्त्रमुत पृथगिति, किमन्योन्यनिरपेक्षाणां फलसाधनत्वमुत सहितानामित्यर्थः । यत्त्वत्र भाष्यकारेण पुरुषपरत्वादिनिराकरणं कृतं कामशब्दस्य तदिहासूत्रितमपि सूत्रितविचारोपोद्घातत्वेन भावार्थाधिकरणोपोद्घातभूतप्रतिपदाधिकरणवत्कृतमिति वेदितव्यम् । निमित्तपरत्वं तु प्रयोगे पुरुषश्रुतेरित्यत्र प्रसङ्गात्सूत्रकारणैव निराकृतमिह भाष्यकारेण स्मारितम् । इदं च पुरुषपरत्वादिनिराकरणं स्वर्गकामाधिकरणस्याप्युपोद्घातत्वात्तत्रैवास्माभिरनागतप्रत्यवेक्षणेन प्रदर्शितम् । निमित्तपरत्वमप्यनाकाङ्क्षितत्वादयुक्तम् । आकाङ्क्षितत्वात्तु फलमेवानेन प्रतिपाद्यतइति युक्तम् ।

पुरुषस्य नियोज्यस्य ये विदुः प्रतिपादनम् ।
कामशब्देन भाष्येण तएतेन निराकृताः ॥१॥

कार्य्यस्य फलानपेक्षत्वात्तदपेक्षितो नियोज्य एव स्वर्गकामादिशब्दैः प्रतिपाद्यतइति ये मन्यन्ते तेषां पुरुषपरत्वनिराकरणपरभाष्यविरोधः न ह्यनेन कर्त्तृवचनत्वमेव निराक्रियते । ननु पुरुषस्यायं वक्तेत्यादिना पुरुषपरत्वमात्रनिराकरणात् ।

निमित्तपरता चैवं श्रुत्यबाधात्प्रसज्यते ।
लिङ्गबाधस्तथा हि स्यादन्यथा श्रुतिबाधनम् ॥२॥

यदि च नियोज्यपरः स्वर्गकामशब्दः स्यात्ततः स्वर्गकामनाविशिष्टस्य गृहादिदाहविशिष्टस्येव पुरुषस्य नियोज्यत्वात्तद्वदेव कामना निमित्तं स्यान्न फलत्वं स्वर्गस्य सिध्येत् ।

स्यादेतत्। दाहादयो हि निष्पन्ना युक्तं यन्निमित्तीभवन्तीति स्वर्गस्त्वनिष्पन्नो न निमित्तं भवितुमर्हतीति फलतयैव नियोज्यविशेषणमिति। तन्न। अनिष्पन्नस्य निष्पन्ननियोज्यविशेषणत्वायोगान्न ह्यसति विशेषणे तद्विशिष्टस्य नियोज्यस्य सिद्धिरवकल्पते। असिद्धेन च कथं नियोगः साध्यते तेन तत्सिद्धिमङ्गीकुर्वता ऽवश्यमेव फलविषया कामना तद्विशेषणमभ्युपगन्तव्यं सा च सिद्धत्वात्शक्नोत्येव परस्त्रीकामः प्रायश्चित्तं कुर्यादितिवन्निमित्तत्वेनैव नियोज्यमवच्छेत्तुम्। एवं च सति सर्वलोकावगतक्रियाकार्याभिधानं लिङ्श्रुतेरबाधितं भवति। कामस्वभावबाधो न युक्त इति चेत् न। श्रुतिप्राबल्यात्। तत्रैतत्स्यात्। यद्यपि निमित्तत्वेनापि कामान्वयः संभवति तथाऽपि फलत्वेनैव विशेषणत्वमङ्गीकर्त्तुं युक्तं कामनास्वभावभङ्गाप्रसङ्गात्। कामाना हि स्वभावत एव काम्यमानप्रधाना। निमित्तत्वे च सति तत्प्राधान्यं हीयेतेति फलत्वमेव युक्तमिति। तन्न। श्रुतेर्लिङ्गाद्बलीयस्त्वात्। कामनास्वभावो हि लिङ्गम्। तस्य च निमित्तपरत्वे बाधः फलपरत्वे तु लिङ्श्रुतेर्बाधः सा हि लोके क्रियारूपकार्य्याभिधायित्वेनावगता सती तत उत्तार्य फलपरत्वे सत्यर्थान्तरं नेतव्या स्यात्। तत्र लिङ्गानुग्रहेण श्रुतिं बाधित्वा फलपरत्वमभ्युपेयतामुत श्रुत्यनुसाराल्लिङ्गबाधेन निमित्तपरत्वमिति संदेहे श्रुत्यनुग्रहो न्याय्यः। फलपरत्वे हि तस्य कालान्तरभावित्वात्तत्साधनत्वं क्षणभङ्गुरस्य कर्म्मणस्साक्षान्न संभवति। न च फलापूर्वद्वारेणोत्पत्त्यपूर्वद्वारेणेव परमापूर्वसाधनस्यापि कर्म्मणः फलसाधनत्वं संभवति अतत्समवेतस्यातत्कालीनस्य चापूर्वस्य तच्छक्तित्वतद्व्यापारत्वायोगात्। शक्तिव्यापारयोरेव फलसाधनत्वनिर्वाहकत्वात्। अन्यद्वारेण किलान्यस्य साधनत्वं काष्ठादेरिव ज्वलनादिद्वारेणानुभवस्य वा संस्कारद्वा-

रस्मृतिपाकसाधनत्वं न संभवतीत्यसाधकं कर्म्म स्यात् । साधनसाधनं तु स्यात् न च किल साधनं फलं लिप्समानेन साधने साक्षात्प्रवर्त्तितुमशक्नुवता व्रीहिकामेनेव कर्षणं कार्यतया ऽवगन्तुं शक्यमित्यनया स्वतन्त्रया लोकविरुद्धया प्रक्रियया लिङ्श्रुतेर्लोकप्रसिद्धक्रियाकार्याभिधानपरित्यागेनालौकिकापूर्वाख्यकार्याभिधायित्वं कल्पनीयमिति श्रुतिबाधप्रसङ्गान्निमित्तपरत्वमेव ज्यायः । नन्वेवं सति प्रयोजकत्वं विधेः कल्प्यमिति गौरवं स्यात् । नैष दोषः श्रुत्यनुग्रहार्थं निमित्तपरत्वाभ्युपगमेन तत्कल्पनस्य न्याय्यत्वात् । न चैतदतीव कल्पनीयं सामान्येनैव कार्यस्य स्वसाधनप्रयोजकत्वं लोकत एव सिद्धं धूमस्येवाग्न्यनुबन्धित्वं रूपस्येव चाक्षुषत्वम् । अतश्च कार्यविशेषवत् पूर्वानवगते ऽवगम्यमाने ऽपि तस्य प्रयोजकत्वमग्न्यनुबन्धित्वादिवन्निर्ज्ञातचरमेवानुसंधीयते न त्वपूर्वं किं चित्कल्पयितव्यम् । सामान्येनावगतमप्यस्मिन्विशेषे ऽनवगतमेव कल्प्यमिति चेत् । नेदं तावदनुमानस्यावगतगोचरत्वसमयं विस्मरता न भाषितुं युक्तम् । अपि चैतावन्मात्रं कामाधिकारे ऽपि फलस्य कल्पनीयमेव । नो खलु फलविशेषस्य स्वर्गादेर्ज्योतिष्टोमादिप्रयोजकत्वं लोकसिद्धम् । न च फलस्यातदात्मनः कार्याद्विशेषतः प्रयोजकत्वं लोकसिद्धं येन न तत्कल्पनीयम् । किं च । फलमपि न फलतया प्रयोजकं किं तु कार्यतया सा चाफलरूपस्यापि कार्यस्याविशिष्टेति न किं चिद्गौरवम् । किं च ।

फलस्य विध्यधीनस्य तावन्मात्रनिरीक्षणात् ।
नैव कामाधिकरे ऽपि प्रयुक्तिः साधने ऽङ्गवत् ॥ ३ ॥

यदि हि नैमित्तिकाधिकारवत्कामाधिकारे ऽपि विधेः प्रयोजकत्वं न स्यात् ततः शक्येतापि वक्तुं प्रयोजकत्वं मा

कल्पीति कामाधिकारत्वं परिकल्प्यतइति न त्वेतदस्ति कामाधिकारे ऽपि विधिरेव साधनानुष्ठानमङ्गानुष्ठानवत् प्रयुङ्क्ते न फलं तस्य कालान्तरभाविनस्तत्कालावस्थायिविध्यर्थमात्रसाध्यस्य तत्सिद्धिमात्रप्रतीक्षत्वात् । न हि तत्साक्षात्कर्म्मणा सिध्यति यतस्तदनुष्ठापयेत् । विधिस्तु तेनैव साध्यमानो युक्तं यत्तदनुष्ठापयतीति । सद्वारमेव विधिवत्फलमपि प्रयोजकमिति चेत् न द्वारासंभवात् । अथापि स्यात् यथा हि विधिरुत्पत्त्यपूर्वद्वारेण प्रधानानामङ्गानां च प्रयोजको भवति । न हि तेषामुत्पत्त्यपूर्वं साक्षात्साध्यमपि प्रयोजकमकार्यत्वात् । न ह्युत्पत्त्यपूर्वं कार्यं किं तु तेन परमापूर्वम् अकार्यं च न प्रयोजकमिति परमापूर्वमेव सद्वाराणां कर्म्मणां प्रयोजकं तद्वत्कामाधिकारे फलमप्यपूर्वद्वारेण साधनं प्रयुङ्क्ते इति । तच्च नैवम् । द्वारासंभवात् । यदि ह्युत्पत्त्यपूर्ववत् परमापूर्वमपि स्वातन्त्र्येण प्रयोजकं भवितुमशक्तं ततस्तद्वदेव प्रयोजकस्य फलस्य द्वारीभवेत् । तत्तु स्वयमेव प्राधान्येन कार्यमव्यवहितं च फलापेक्षया प्रथमप्रतीतं च किमिति व्यवहितचरमप्रतीतफलप्रयुक्तिं प्रतीक्षते औपादानिकं हि फलस्य साध्यत्वं तेन प्रतिपन्ननियोगविशिष्टनियोज्यसंबन्धाधीनत्वात् युक्तमेव चरमप्रतिपन्नत्वम् । ननु काम्येषु फलकरणीभूतस्य विषयत्वात्फलसाध्यत्वपुरस्सरमेव नियोगसाध्यत्वम् । नूनं भवान्यथाशक्ति निर्णये ऽपि न सम्यगालोचितपूर्वी । तत्र हि नियोगसाध्यत्वनिरपेक्षस्य फलस्य कर्म्मसाध्यत्वे निरूप्यमाणे अपूर्वाभिधानप्राधान्यप्रहाणादिदूषणगणः प्रदर्शित एव । तेन नियोगः स्वयमेव प्रयुक्तिसामर्थ्यादव्यवधानाच्च न फलस्य कर्म्म प्रयुञ्जानस्य द्वारीभवितुमर्हति । अतत्प्रयुक्तत्वाच्च । उत्पत्त्यपूर्वाणि हि स्वयमकार्यरूपाणि परमापूर्वसिद्ध्युपायत्वेन प्रयुक्तकार्यत्वानि युक्तं यत्परमापूर्वस्य क-

र्म्मप्रयोजकस्य द्वारं भवन्तीति परमापूर्वं तावत्कार्यं तच्च नर्त्ते ऽवान्तरापूर्वेभ्यः सिद्ध्यतीति तान्यपि कर्त्तव्यानि। तानि च कर्म्माधीनसिद्धीनीति कर्म्मापि कर्त्तव्यमित्यनेन हि क्रमेणापूर्वं साधनानुष्ठापकं भवति। न चैवं फलकर्त्तव्यत्वाधीनमपूर्वकर्त्तव्यत्वं तस्य स्वयमेव कार्यत्वात्। यच्च यस्य न प्रयोजकं तत्तद्वारेणान्यस्य प्रयोजकं भवतीति कुत एतत्। तत्सिद्धं कामाधिकारे ऽपि विधेरेव प्रयोजकत्वं न नैमित्तिककामाधिकारयोः कश्चित्प्रयुक्तिकल्पनाविशेष इति। प्रत्युत।

कामाधिकारे ऽभ्यधिकं त्रयं स्यादपूर्वरूपं फलसाधनत्वम्।
यागस्य तत्साधनता च कल्प्या प्रयोजकत्वं तु समानमेव ४

प्रयुक्तिकल्पना तावत्पक्षद्वये ऽपि फलापूर्वयोरुभयत्र वा ऽपूर्वस्याविशिष्टैव कामाधिकारे त्वप्रसिद्धमपूर्वरूपं तस्य फलसाधनत्वं यागस्य तत्साधनत्वं च कल्प्यमिति विशेषः। अथापि नाम कामाधिकारे न प्रयुक्तिकल्पना तथा ऽप्यपूर्वस्वरूपं धर्म्मितस्य च फलसाधनत्वं यागस्य तत्साधनता कल्प्या। नैमित्तिकत्वे तु।

क्रियारूपस्य कार्य्यस्य सिद्धरूपस्य धर्म्मिणः।
प्रयोजकत्वमात्रं स्यात्तन्नैमित्तिकता वरम् ॥ ५ ॥

लोकसिद्धार्थत्यागाच्च श्रुतिबाधः स्थित एव। तस्माच्छ्रुत्यबाधात्कल्पनालाघवाच्च नैमित्तिकत्वमेव युक्तं न कामाधिकारत्वमिति। कथं पुनर्यच्छब्दादिविरहिणो निमित्तत्वम्। न वयं श्रौतं निमित्तत्वं ब्रूमः। किं तु जञ्जभ्यमानवत्कामनाविशिष्टस्य नियोज्यत्वादर्थान्निमित्तत्वं कामनायाः कल्प्यते।

किं च यच्छब्दवाच्यत्वं न निमित्तस्य विद्यते ।
उद्देश्यत्वं ततः सिद्ध्येदिह तत्सिद्धमन्यतः ॥६॥

यच्छब्दो ह्युद्देश्यत्वमात्रं प्रतिपादयति न निमित्तत्वम् । अनुपादेयविशेषणविशिष्टस्योद्दिष्टस्य नियोज्यत्वेन गृहदाहादिमतो ऽन्वयाद्विशेषणभूतस्य दाहस्यार्थिकं निमित्तत्वमुच्यते तच्च फलकामस्यापि नियोज्यस्योद्दिष्टत्वात्तत्कामनाया अप्यविशिष्टमिति युक्तं निमित्तत्वम् । वहुशश्च यच्छब्दादि श्रूयते यः प्रजाकामः पशुकामः स्याद्यदि कामयेत वर्षुकः पर्ज्जन्यः स्यादित्यादिष्विति न निमित्तपरत्वे कश्चिद्विशेषः । ननु नित्यानि दर्शपूर्णमासादिकर्म्माणि न तानि नैमित्तिकानि भवितुं प्रभवन्ति यदि तावन्नियमेन क्रियेरंस्ततो नैमित्तिकविध्यानर्थक्यम् । अथ तद्वशेन निमित्ते सत्यनुष्ठानं ततो यावज्जीवविधेरानर्थक्यम् । तस्मात्कामाधिकार एव युक्त इति । नेत्युच्यते । यदि ह्युभयपक्षसाधारणं वाक्यं स्यात्ततो ऽस्मिन् पक्षे ऽर्थवत्त्वं समाश्रीयेत अत्र तु श्रुत्यवाधनादियुक्तिकदम्बकेन निमित्तपरत्वमेवावसीयते । यदि तथा सत्यानर्थक्यमन्यतरस्य भवति भवतु न ह्यानर्थक्यं नाम श्रुतिप्रमाणवर्गे ऽन्तर्भवति यस्यार्थवत्त्वमवगम्यते तस्य तदेव यस्य त्वानर्थक्यमेव गम्यते तस्यापि तदेव ज्यायः । आवृत्तिर्वा प्रयोगस्य दाक्षायणयज्ञवदर्थवत्त्वायास्तु न त्वर्थान्तरकल्पना शक्यते कर्त्तुम् । अथ वा नैमित्तिकस्यैवानुष्ठानस्य यावज्जीवकालाभ्यासो यावज्जीववाक्येन लक्षणया विधीयते सा हि लौकिकी लिङ्शब्दस्य त्वर्थान्तरकल्पना इहैव । अतो न कामाधिकारत्वं युक्तम् । आश्रीयतां वा सूत्रभाष्यारूढं वार्त्तिककारीयं दर्शनं यागाद्यवच्छिन्ना भावना विध्युपेता पुरुषाभिलषितभाव्यापेक्षिणी वाक्येन स्वर्गादिकं भाव्यतया स्वीक-

रोति न निमित्ततया तस्यानपेक्षितत्वादिति। तत्र हि यागादेः करणत्वं कल्पितापूर्वद्वारेण सम्भवति काष्ठकर्षणादीनामिव ज्वलनविलेखनादिद्वारेण व्रीहिपाकादिसाधनत्वम् आग्नेयादि-षट्कस्यैवोत्पत्त्यपूर्वद्वारेण परमापूर्वसाधनत्वम् अवगोरणादेर्वा शतयातनादिसाधनत्वमिति सर्वं सुस्थितं भवति॥

सौर्यादिषु निमित्तत्वं कामनायाः प्रसज्यते।
न हि तत्र वचः किं चिदानर्थक्यमुपाश्नुते॥ ७॥

भवतु वा दर्शपूर्णमासादिषु यावज्जीवश्रुतिसद्भावात्फलप-रत्वं येषु तु सौर्यादिषु नित्यत्वश्रुतिर्नास्ति तत्र किमानर्थक्यप-रिहारार्थं फलपरत्वमङ्गीक्रियते। अथायमभिप्रायः।

दर्शादावेव वाच्यत्वमपूर्वस्यावधारितम्।
मा भाजि कामनालिङ्गमित्यन्यत्रापि संश्रितम्॥ ८॥

यावज्जीवश्रुत्यानर्थक्यपरिहारार्थमेव तावद्दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिषु फलपरत्वे कामशब्दस्यावधारिते सत्य-तत्साधने कामिनः कार्यावगमानुपपत्तेः कर्म्मणश्च क्षणभङ्गुरस्य तत्साधनभावासम्भवात्तदतिरिक्तमेव स्यात्तु कार्यं लिङ्शब्दः प्रतिपादयतीत्यवगते सौर्यादिष्वपि लिङ्श्रुतेः कर्म्मणि तदतिरिक्ते वा पक्षपाताभावात्कामस्वभावाभङ्गार्थं फलपरत्वमेव युक्तमिति। नेति वदामः।

अभिधानश्रुतिर्यद्यप्येवं लिङ्गं न बाधते।
समानपदरूपा तु श्रुतिरस्यापि बाधिनी॥ ९॥

यद्यपि लिङ्शब्दस्य लोके क्रियायां प्रयोगाद्दर्शपूर्णमा-सादिवाक्येषु चापूर्वे प्रयोगादुभयानुगतकार्यसामान्यवाचिनः क्रियातिरिक्ते ऽपि कार्यविशेषे नास्त्यभिधानव्याघातः तथा

ऽपि सामान्यस्य विशेषापेक्षायां समानपदोपादानलक्षणया श्रुत्या प्रकृत्युपात्तो भावार्थ एव विशेषत्वेन सम्बध्यमानो न पदान्तरोपात्तनियोज्यविशेषणीभूतकामनास्वभावाख्यलिङ्गवशेन निवारयितुं शक्यते उच्चरन्नेव हि प्रत्ययः स्वार्थं कार्यसामान्यं प्रकृत्यर्थानुरक्तमेवाभिधत्ते । यथोक्तम् "प्रातिपदिकादुच्चरन्ती द्वितीयाविभक्तिः प्रातिपदिकार्थो विशेषक इत्याहे"ति । तेनाभिधानाविशेषे ऽपि पदश्रुतिविरोधादेव लिङ्गबाधः । तदिदमुपहसन्ति प्राभाकराः । ते किल मन्यन्ते ।

अपूर्वस्याभिधेयत्वे क्रिया लाक्षणिकी भवेत् ।
अनेकार्थत्वदोषात्तु न द्वयोरभिधेयता ॥१०॥

यदा हि फलकामिनियोज्यसमभिव्याहारात्क्रियातिरिक्तमपूर्वं लिङाद्यभिधेयमास्थितं तदा न क्रियाया अपि तदभिधेयत्वं सुकल्पमनेकार्थत्वस्यान्याय्यत्वात् क्रियाप्रतीतेश्च लक्षणया ऽप्युपपत्तेः । अपूर्वकार्यता हि क्रियाकार्यत्वाविनाभूता शब्देनावगता तदुपस्थापयतीति नाभिधेयत्वसम्भवः । न च सौर्यादिषु लक्षणाकारणमस्तीत्यपूर्वमेव तत्तद्गतैर्लिङादिभिरभिधीयते । अतो न युक्तः कामनास्वभावभङ्गेन निमित्तपरत्वाभ्युपगमः । इदं तु तेषामभिमानमात्रमिति प्रामाणिका न श्रद्दधति तथा हि ।

अनेकार्थत्वमन्याय्यं शक्त्यनेकत्वदोषतः ।
एकयैवोभयोः सिद्धौ प्रतीतेरभिधेयता ॥११॥

न तावल्लौकिका गामानयेत्यादिषु लिङो लक्षणया वृत्तिं मन्यन्ते किं तु मुख्यतयैव । तत्र यदि क्रियाकार्ये मुख्यया वृत्त्या ऽभिधीयमाने शक्त्यन्तरकल्पना ऽऽपतेत् ततो लाक्षणिकत्वमभ्युपगम्येत न त्वेतदस्ति एकयैव कार्यमात्राभिधान-

शक्त्योभयत्र मुख्यत्वोपपत्तेः । अनेकार्थत्वं ह्यनेकशक्तिकल्पनादोषादन्याय्यं न स्वरूपेण मा दूषि नानाविधनित्यकाम्यप्राकृतवैकृतनिषेधापूर्वाणां तदभिधेयत्वम् । अतो यथा तेषां कार्य्यत्वरूपैकोपलक्षणयोगात्तदभिधेयत्वं भवति एवं क्रियाया अपि तपस्विन्यास्तद्योगात्तदभिधेयत्वं भविष्यति । आह । नैकया शक्त्या क्रियास्वरूपे हि प्रकृत्युपात्ते तस्य कर्त्तव्यतारूपं विशेषणमेव लिङा प्रतिपादयितव्यम् । अपूर्वं तु नान्येन केन चित्प्राप्तमिति लिङैव कर्त्तव्यताविशिष्टं तत्स्वरूपमभिधातव्यमिति नैकप्रकारसम्भवः । यदि विशिष्टाभिधायी ततो ऽपूर्वमेव न क्रियामभिदध्यात् । अथ विशेषणाभिधायी ततः क्रियामेव नापूर्वमभिदध्यादिति । नैतदेवम् । विशिष्टाभिधाय्येवायं शब्दः स यदा क्रियापरो भवति तदा तत्स्वरूपस्य प्रकृतित एव प्राप्तत्वाद्विशेषणपरो भवति । तद्यथा दण्डी प्रैषानन्वाहेति विशिष्टाभिधाय्यपि दण्डिशब्दो विशेषणपरो भवन्नपि न लक्षणया । तथा कार्यवचनः शब्दो ऽपि यदा क्रियायां प्रयुज्यते तदा कार्यत्वरूपविशेषणपरत्वं श्रुतिवृत्तः सम्प्रतिपद्यते नैतावता लक्षणा भवतीत्युभयत्रापि मुख्यमेव । यस्तु वदति । नन्वेवं सति कामाधिकारे ऽपि समानपदोपात्तभावार्थ एवाभिधेयः स्यादिसपूर्वाभिधानमुत्सीदेत् । तेन यदैव कामिनियोज्यसंबन्धादपूर्वाभिधायकत्वमवगतं तदा तन्निर्वाहार्थं क्रियाया लाक्षणिकत्वमध्यवसितमिति स एवमनुशासितव्यः हन्त किं नाश्रौषीर्यो हि पाषाणान्भक्षयति ईषत्करास्तस्य मुद्गशष्कुल्यो भवन्तीति यो हि नियोज्यसम्बन्धाल्लिङ्शब्दं क्रियारूपकार्यविशेषवाचिनमवगतमपि तत उद्धृत्यापूर्वं नयति स कथं सामान्यवाचिनमपूर्वं नेतुं न क्षमेत । तस्मात्कर्त्तव्यतासामान्यवाची सन्नपि यत्र फलकामस्य नियोज्यत्वं तत्र तद्बलेनापूर्वमभिधत्ते । अ-

२६

न्यत्र तु समानपदोपादानाक्रियाम्। तेन सामान्यवाचित्वा-ल्लिङ्शब्दस्य यथा ऽपूर्वाणां तद्योगात्तदभिधेयत्वम् एवं क्रिया-या अपि किं नोपगम्यते। तत्कर्त्तव्यताभेदादिति चेत्। न तदभावात्। तत्रैतत्स्यात् कृत्युद्देश्यता कर्त्तव्यता लिङभिधेयो-पलक्षणं सर्वाणि चापूर्वाणि तदुपेतानीति युक्तं यत्तैरभिधी-यन्तइति क्रियायास्तु फलोद्देशप्रवृत्तकृतिव्याप्यतात्मिका कर्त्त-व्यतेति कर्त्तव्यताभेदान्नाभिधेयत्वसम्भवइति। नैतदेवं कर्त्त-व्यताभेदाभावात्। यद्यपि लौकिकानां गवानयनादीनां न स्वातन्त्र्येण कर्त्तव्यता ऽवगता तथा ऽपि वेदे सौर्यादियागानां तादृश्येव कर्त्तव्यता भविष्यति। स्वतन्त्रकार्याभिधायी हि लि-ङ्शब्दो यजिना समभिव्याहृतस्तमेव तादृशं प्रतिपादयति। न लौकिकक्रियायास्तादृशी कर्त्तव्यता ऽवगतपूर्वेति चेत्। न। नियोगस्य वा किमवगता येनाभ्युपगम्यते। लोकानवगता ऽपि वेदादेव तस्य तादृशी कर्त्तव्यता ऽवगम्यतइति चेत्। क्रियायामपि तुल्यम्। ननु प्रत्यक्षविरुद्धा दुःखरूपायाः क्रिया-याः कथमागमेनापि शक्यते कर्त्तव्यता प्रतिपादयितुम्। नि-योगात्मा वा भगवद्भक्तिमानन्दैकरसो यतस्तस्य कर्त्तव्यता न प्रमाणान्तरविरुद्धा स्यात्। सो ऽपि बहुद्रव्यव्ययप्रयाससाध्यो दुःखाकर एव न चेतनव्यापारस्योद्देश्यतामनुभवितुमर्हति। यथा तु तस्य नित्यनिरपेक्षाम्नायात्कर्त्तव्यता तथा क्रियाया अपि भविष्यति। अपि च नियोगस्य सुखदुःखप्राप्तिपरिहारव्यति-रिक्तस्य क्रियावन्न स्वातन्त्र्येण कार्यत्वमुपपद्यते। कृतिर्हि चेत-नप्रयत्नरूपा इच्छापूर्वकत्वात्तद्गोचरमेव गोचरयितुमर्हति। इच्छा हि सुखदुःखपरिहारगोचरैवेति सा ऽपि तद्गोचरैव। अतो नापूर्वस्य प्राधान्यमुपपद्यतइति यथा शक्तिनिर्णये वर्णितम्। किं च। नान्यार्थप्रवृत्तकृतिव्याप्यतात्मिका क्रियायाः कर्त्तव्यतेति

भवता शक्यते वक्तुम् इष्टव्याघातप्रसङ्गात् लोके हि क्रियाकार्याभिधायित्वे लिङादीनामवगते क्रियारूपविशेषणपरिहारो न वेदे ऽपूर्वपर्यन्ततामात्रं कामपदसमभिव्याहारादवगम्यतइति भवतां दर्शनम् । तत्र यदि अन्यार्थप्रवृत्तकृतिव्याप्यतारूपकर्त्तव्यतोपेता क्रिया तदर्थत्वेनावगता हन्त तर्हि वेदे ऽपि तद्रूपापरित्यागेनापूर्वपर्यन्ततामात्रं कल्पनीयमित्यपूर्वप्राधान्यमिष्टं व्याहन्येतेति । स्वर्गकामपदसमभिव्याहारो हि क्रियारूपस्यैव विशेषस्य परिपन्थी न त्वन्योपसर्जनत्वस्य तेन लोकवेदयोरुभयोरन्योपसर्ज्जनकार्याभिधानान्नास्त्यनेकार्थत्वम् । प्रत्युत स्वर्गकामपदसमभिव्याहाराच्चैवमेवागम्यते । यो हि स्वतन्त्रकार्याभिधायित्वं लिङादीनामिच्छति स वक्तव्यः किमत्र ते प्रमाणमिति । स चेद् ब्रूयात्फलकामिनियोज्यसमभिव्याहारादनन्योपसर्ज्जनं क्रियातिरिक्तं कार्य्यं सिध्यतीति प्रतिब्रूयादेनम् । न विपरीतसाधनत्वादिति । कामपदसमभिव्याहारो ह्यन्योपसर्ज्जनकार्याभिधानएव प्रमाणं न स्वातन्त्र्ये । स हि स्वर्गं कामयमानस्तत्कामित्वेन रूपेण तदुपसर्जनं कार्यं बोद्धुमलमित्यनेन हेतुना तत्साधनत्वायोग्यक्रियापरित्यागेन तदनुकूलापूर्वाभिधानं लिङादीनामुपेयते तत्कथं स्वप्रमाणविरुद्धप्राधान्याभ्युपगमः । ननु वस्तुवृत्त्या फलानुगुणमपि न तथा शब्देनाभिधातव्यम् । किमेतावता स्वप्रधानभूतमभिधातव्यं न हि प्राधान्ये कश्चिदपि प्रमाणलवः समस्ति । अपि च नियोज्यपदसम्बन्धादेवं कल्पयितव्यं यादृशं कार्यरूपं फलकामी ममेदं कार्यमिति बोद्धुमलं तादृशमभिधातव्यं स च स्वकामानुगुणमेव बोद्धुमर्हतीति तथैवाभिधातव्यम् अङ्गापूर्ववत् । यो हि प्रयाजादिविषयापूर्वं विनियुक्तविषयतया स्वतन्त्रीभवितुमसमर्थमिति स्वशब्देनाधिकारवाक्यनिर्ज्ञातप्रधानकार्याभिधानशक्तिना ऽपि लक्षणया ऽन्यो-

पसर्जनीभूतमभिधीयते इति वदति स कथं कामाधिकारवाक्यादन्यत्राविदितप्रधानकार्याभिधानसामर्थ्येन प्रत्युत लोकावगतगुणभूतकार्याभिधानसामर्थ्येन कामपदसमभिव्याहाराच्चापूर्वाभिधानप्रमाणादवश्यंभावितादृक्त्केन लिङ्शब्देन करणीभूतविषयतया च तद्वदेव विनियुक्तविषयतया प्रत्यूढप्राधान्यमपूर्वं प्रधानतयैव लोकस्वप्रमाणस्वाविषयाविरुद्धमभिधीयतइति वदन्हास्यो न स्यात्। तदुभयत्रापि गुणभूतकार्याभिधानशक्त्यैकयैव मुख्यत्वोपपत्तेर्न क्रियाया लाक्षणिकत्वम्।

लोकतः स्वप्रमाणाच्च फलार्थविषयत्वतः।
अन्यार्थत्वमपूर्वस्य प्राधान्यं न कुतश्चन ॥१२॥

इति संग्रहश्लोकः। एतेन नैमित्तिकाधिकारेऽपि कामाधिकारव्युत्पत्त्यनुसारादन्यार्थस्यैवापूर्वस्याभिधानात् तदुपपत्त्यर्थं नियोज्यवत्फलमवश्यं कल्पनीयमिति दर्शितम्। किं च।

प्राधान्येऽपि नियोगस्य गुणभावेऽपि कर्म्मणः।
विशेषद्वयहानेन सामान्यस्यैव वाच्यता ॥१३॥

यद्यपि नियोगस्य कृत्युद्देश्यतया प्रधानस्यान्यादृशी कर्त्तव्यता क्रियायाश्चान्योद्देशप्रवृत्तकृतिव्याप्यतया गुणभावादन्यादृशी कर्त्तव्यता तथाऽप्युभयत्र युज्यमानस्य लिङ्शब्दस्य गोशब्दस्येव खण्डादिषु प्राधान्यगुणभावप्रहाणेन खण्डत्वादिविशेषप्रहाणेनेव सर्वानुगतं कार्यत्वसामान्यं गोत्वमिव वाच्यं स्यात्। अनेकत्र प्रयुक्तस्य शब्दस्य सर्वत्र मुख्यत्वोपपत्तावन्याय्या लक्षणा तदेतत्कपिञ्जलाधिकरणे भगवता भाष्यकारेण महता प्रबन्धेन साधितमपि स्वसमयसंतमसतिरस्कृतदृष्टिभिर्नालोचितम्। एतेन गामानयेत्यादिषु कार्यान्विते प्रयोगात्तथा नद्यास्तीरे फलानि सन्तीत्यादिषु सिद्धार्थान्विते प्रयोगादुभ-

यानुगताकाङ्क्षितसंनिहितयोग्यार्थमात्रान्वितस्वार्थाभिधायित्वाद् गवादिशब्दानां कार्यान्विताभिधायित्वं निरस्तम् ।

यदि त्वेतन्न मृष्येत प्रमाणान्तरगोचरः ।
शब्दानामभिधेयं स्यात्ततो वेदाप्रमाणता ॥१४॥

यदि ह्यनेकत्र प्रयुज्यमानस्यापि शब्दस्य सर्वानुगतसामान्यसद्भावे ऽपि तद्वाचित्वमनभ्युपेत्य व्युत्पत्त्यवसरावगतविशेषवाचित्वेनान्यत्र लाक्षणिकी वृत्तिरभ्युपगम्येत ततो वृद्धव्यवहारे प्रमाणेन तदाभासेन वा वक्तृबुद्ध्यारूढएवार्थे शब्दप्रयोगात्तथाविध एव सर्वशब्दानामभिधेयः स्यात् वेदे चापौरुषेये तदसम्भवादप्रतिपादकत्वं वेदस्य पौरुषेयत्वं वा बलादापद्यतइत्यप्रामाण्यं स्यात् । तथा लिङ्शब्दस्यापि व्युत्पत्तिस्थानाभिमते कामाधिकारे फलकामिनियोज्यफलानुगुणापूर्ववाचित्वं व्युत्पन्नमिति नैमित्तिकनिषेधाधिकारयोरपि व्युत्पत्त्यनुसारेण तथाविधापूर्वाभिधानात्तदनुसारेण फलं तत्कामी च नियोज्यः कल्पयितव्य इति सर्वत्र फलाधिकारत्वं जातेष्टिवत्स्यात् । तस्मात्सिद्धार्थे ऽपि वेदस्य प्रमाण्याविघातादानन्दं ब्रह्मेत्यादीनां प्रामाण्यनिराकरणं नास्तिकतामेव फलतीत्यलमनेन । तस्मान्न क्रियाया लाक्षणिकत्वमिति सौर्यादिषु लिङ्शब्दस्य कार्यसामान्यवाचिनः समानपदोपादानश्रुत्या भावार्थविषयत्वात्तन्मावाधीति निमित्तत्वमेव कामनाया भवन्मते स्यात् । तस्माद्विधियुक्तायाः क्रियायाः फलापेक्षत्वात्तत्परत्वमेव कामशब्दस्य न निमित्तपरत्वमनपेक्षितत्वादित्ययमेव निमित्तपरत्वनिराकरणहेतुः अभ्युच्चयमात्रं तु नित्यत्वं भङ्गुराया अपि क्रियायाः फलसाधनत्वमवान्तरव्यापारापूर्वद्वारेण प्रागेव समर्थितम् । बह्वेव हि तत्रोदाहरणं काष्ठाग्नेयावगोरणादीति नात्र विशेषे मनः

खेदयितव्यम् । न चालौकिकमभिधेयं कल्प्यम् । अत्र संग्रह-श्लोकाः ॥

श्रुतिः समर्थिता भवेन्निमित्ततासमाश्रये ।
विरुध्यते हि कामनास्वरूपलिङ्गमेव तु ॥ १५ ॥
फले समाश्रिते श्रुतिः प्रसिद्धमर्थमुत्सृजेत् ।
अलौकिकं समाश्रयेदतश्च सा विरुध्यते ॥ १६ ॥
निमित्तताश्रये विधेः प्रयुक्तिकल्पनं तु यत् ।
फले समाश्रिते ऽपि तत्समं फलस्य तस्य वा ॥१७॥
अपूर्वरूपमस्ति तत्फलस्य साधनं तथा ।
यजिश्च तत्र साधनं त्रयं त्विदं ततो ऽधिकम् ॥१८॥
अथ प्रयुक्तिकल्पनं निमित्तएव नो फले ।
तथा ऽपि तद्वरं यतस्त्रयं प्रकल्प्यमन्यथा ॥ १९ ॥
कथं तु यत्पदादिभिर्विना निमित्ततेति चेत् ।
फलार्थिनो नियोगतो न तु श्रुतेर्निमित्तता ॥ २० ॥
कथं तु नित्यवच्छ्रुतं निमित्तवद्भविष्यति ।
अनर्थकं प्रसज्यते वचस्तयोर्हि किं चन ॥ २१ ॥
भवत्वनर्थकं न हि प्रयोजनात्प्रमास्थितिः ।
प्रयोगभेदकल्पनं निमित्ततो ऽथ वा भवेत् ॥ ॥२२॥
निमित्तता प्रसज्यते न यत्र नित्यवच्छ्रुतिः ।
द्वयोः प्रसङ्गतः श्रुतिर्न लिङ्गबाधनक्षमा ॥ २३ ॥
अतः स्वभावलिङ्गतः फलत्वमेव चेन्न तत् ।

पदश्रुतिर्हि कामनास्वरूपलिङ्गबाधिनी ॥ २४ ॥
अपूर्वमेव चेच्छ्रुतिर्ब्रवीति न क्रियामपि ।
द्वयोरपि प्रयोगतो ऽनुवृत्तमेव सा वदेत् ॥ २५ ॥
यथैव गोत्वमेव गोकृतिस्तथैव लिङ्श्रुतिः ।
द्वयोः क्रियानियोगयोर्ब्रवीति कार्यमात्रकम् ॥ २६ ॥
अतः श्रुतेरनुग्रहात्तथा ऽल्पकल्पनादपि ।
निमित्ततैव ते भवेदियं तु तन्निराकृतिः ॥ २७ ॥
अपेक्षते फलं क्रिया विधिक्षमा हि नान्यथा ।
ततस्तदेव गृह्यते निमित्तता ऽनपेक्षिता ॥ २८ ॥
कथं फलस्य साधनं क्रिया विशारुकेति चेत् ।
अवान्तरक्रियान्वयात्स्वरूपतस्तु नो भवेत् ॥ २९ ॥
यथैव वासनावशात्प्रमाणतः स्मृतिर्भवेत् ।
यथेन्धनैरवान्तरक्रियावशाच्च विक्लिदिः ॥ ३० ॥
यथा ऽवगोरणादिना शतादियातनोद्भवः ।
यथैव कर्म्मणस्तव स्वरूपभङ्गुरादपि ॥ ३१ ॥
अवान्तराक्रियावशाद्भवेदधिक्रियाविधिः ।
तथा ततः फलं भवेत्किमत्र खेद्यते मनः ॥ ३२ ॥

तदेवं फलपरत्वे सति किं तदाग्नेयादीनां तन्त्रमुत भेदेनेति विचार्यते । यत्रान्योन्यनिरपेक्षा एवाग्नेयादिभावना भाव्यमपेक्षन्तइति तथैव सम्बध्यन्त इति पूर्वः पक्षः । सिद्धान्तस्तु फलमुद्दिश्याग्नेयादीनामुपादीयमानानां तन्त्राभिधानावगतं साहित्यं

विवक्षितम् एकेनापि च फलेन सर्वेषां नैराकाङ्क्ष्यं भवतीति सर्वेषामेव तन्त्रं फलमिति । ततो ऽङ्गानां निरपेक्षैरेव वाक्यैः क्रतूपकारसाधनत्वेन विनियोगान्निरपेक्षाणामेव तत्साधनत्वं सौर्यार्यमणादीनामिव ब्रह्मवर्चसादिसाधत्वमाशङ्क्योक्तं नैषां वाक्येन विनियोगः स्वरूपमात्रेण तु स्ववाक्यैरुपस्थितानां प्रकरणविनियोगः । तच्चापर्यायव्यापारमिति सह सर्वेषां विनियोगः । कथं त ह्यङ्गविधीनां विनियोजकत्वम् । तदभावे प्रकरणविनियोगस्यासम्भवान्न तु स्वरूपेणैव विनियोजकत्वम् । प्रयोजकैकस्वभावत्वादित्ययुक्तमेतत् । यदा तु श्रेयःसाधनतैव विधिः लिङादिभिरभिधीयतइत्याश्रीयते तदा ऽपि क्रत्वैदमर्थ्यमात्रेण प्रकरणसनाथैः प्रातिस्विकैर्विधिभिर्विनियुक्तानां प्रयाजादीनामेकेनैव प्रधानविधिना ऽष्टदोषदुष्टविकल्पपरिजिहीर्षया सर्वविशिष्टभावनाविधायिना सर्वेषां युगपत्प्रयोगावगमात्तद्वशेनावान्तरकार्यभेदद्वारेण सर्वेषामुपकारकत्वस्य सहैव परिकल्पनात्काष्ठादीनामिव पाकाङ्गानां समुच्चयसिद्धिः । न ह्युपकारमुद्दिश्य पदार्थानां विधिः सम्भवति तेभ्यः प्रागुपकारस्याप्राप्तत्वादिति क्षुण्णमेतत् । यत्र तु प्रमाणान्तरेणैककार्यत्वावगमः यथा व्रीहियवयोः यत्र वा प्रयोगविधिनानात्वमेकार्थत्वे ऽपि यथोद्भिच्चित्रयोः पश्वर्थयोस्तत्र विकल्प इति । ननु यदि प्रधानविधिरेवानुष्ठापकः नाङ्गविधयो ऽनुष्ठापकाः किमर्थास्तर्हि तेष्वर्थवादाः वर्म्म वा एतद्यज्ञस्य क्रियतइत्यादयः ते हि विधेः प्रयोजकशक्तिमुत्तम्भन्तीति स्थितिः अप्रयोजकत्वे तु तेषां किमुत्तम्भनमेषां कार्यमिति । उच्यते । प्रधानविधेरेव सर्वाङ्गविशिष्टप्रधानविधायिनस्तदङ्गस्तुतिद्वारेण सर्वएवार्थवादाः शेषभूता इत्यदोषः । नैतदेवम् । विध्येकवाक्यभावेन ह्यर्थवादानां तत्त्वं न च प्रधानविधिना ऽङ्गवाक्यस्थानामर्थवादानामे-

कवाक्यत्वसम्भव इति न तच्छेषत्वसम्भव इति। नैष दोषः। प्रधानविधिशक्तिर्हि विशिष्टं विषयीकुर्वत्यार्थाद्विशेषणेष्वङ्गेषु संक्रामति तत्स्थविध्येकवाक्यभूता अर्थवादा युक्तं यत्तामुत्तभ्नन्तीति। यथा वायुर्वै क्षेपिष्ठा देवतेत्यनेन विशिष्टालम्भविधिशक्तेरर्थाद्विशेषणभूते वायौ संक्रान्तायास्सहायकरणम्। इयांस्तु विशेषः यत्तत्र वायोर्वाक्येन विनियोगः प्रयाजादेस्तु प्रकरणेन। नैतावता ऽर्थवादसङ्गतेः कश्चिद्विशेषः। तत्सिद्धमङ्गानामपि संभूयकारित्वमिति। तत एककालानां बहूनां प्रधानानामेकदेशकालकर्तृकाणां तादृशान्यङ्गानि तन्त्रं यथा ऽग्नेयादीनां प्रयाजादयः। यत्र त्वन्यतमस्यापि भेदः यथा त्रिकद्वयस्य कालभेदः वरुणप्रघासेषु मारुत्या अन्येषां च देशभेदः तत्रैवापराग्निकानां कर्तृभेदः तत्राङ्गानामावापः आवृत्तिरित्यर्थः। एकदेशकालकर्तृत्वे ऽपि वचनादावापः यथा ऽग्नये पवमानाय निरुप्य पावकशुचिभ्यां समानबर्हिषि निर्वपेदिति। एवं तन्त्रावापस्वरूपे प्रयोगपरिमाणे चिन्तिते तत्परिमाणमेव प्रसङ्गरूपं द्वादशे चिन्त्यते। प्रयोगपरिमाणत्वाविशेषे ऽपि तन्त्रप्रसङ्गाप्रयोजकानां भाष्यकारेण विशेषो ऽभिहितः।

"साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः।
एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधावि"ति॥

यदनेकोद्देशेनानुष्ठीयते तत्तन्त्रं यत्त्वन्यार्थमनुष्ठितं तदनुनिष्पन्नं वा ऽन्यस्य साधनं भवति प्रतिपाद्यं वा तत्राप्रयोजकत्वम्। यथा पुरोडाशकपालं तुषोपवापस्य यथा च पदमक्षाञ्जनस्य वाजिनं वाजिनयागस्य शकृल्लोहिते च निरसनस्य। तत्राविद्यमानमपि कपालादि तुषोपवापादिना न प्रयोक्तुं शक्यतइत्यप्रयोजकत्वम्। यत्र तूभयत्राप्यन्योन्यैनरपेक्ष्येणाङ्गविनियोगे सत्यप्येकार्थानुष्ठितैरेवाङ्गैरन्यस्यापि उपकारसंपत्तेरन्यस्य

प्रयोजकत्वक्षमस्यापि तल्लोपः यथा पश्वर्थानुष्ठितैरेव प्रयाजादिभिरुपकारसंपत्तेः पशुपुरोडाशः पशुसम्बन्धानादरेणैव स्वार्थतया ऽतिदेशेन विनियुक्तान्यपि प्रयाजादीनि न पृथगनुष्ठापयति तत्र प्रसङ्गः । अत्र चान्यार्थालाभे स्वयमपि प्रयोजकं भवति अत एव चाज्यभागौ पशावविद्यमानौ पशुपुरोडाशेनानुष्ठाप्येते । आह । यदि पश्वर्थानुष्ठिता एव प्रयाजादयः पशुपुरोडाशस्योपकुर्वन्ति न तु तदर्थमनुष्ठीयन्ते ।

कथं तर्हि तदङ्गत्वं तादर्थ्यं ह्यङ्गतेष्यते ।
उद्देशेन च तादर्थ्यं नोपकारान्न चात्र सः ॥३३॥

यदुद्देशेन यदनुष्ठीयते तत्तदर्थं तदेव चाङ्गमुच्यते न तूपकारकमात्रम् । न च प्रयाजादयः पशुपुरोडाशोद्देशेनानुष्ठीयन्त इति कथं तदङ्गत्वम् । नन्वेवं सति तुषोपवापाङ्गत्वं वा ।

पुरोडाशप्रयुक्तस्य कपालस्य कथं भवेत् ॥
व्यापार्यते तुषाणां तदुपवापप्रसिद्धये ॥३४॥

यद्यपि पुरोडाशप्रयुक्तमेव कपालस्वरूपं तथा ऽपि तुषोपवापसिद्धौ व्यापार्यतएवेति युक्तमेव परोद्देशप्रवृत्तव्यापारगोचरत्वलक्षणं शेषत्वम् । प्रयाजादयस्तु न कथं चिदपि पशुपुरोडाशोद्देशप्रवृत्तपुरुषप्रयत्नगोचरा इति न तच्छेषत्वमेषां सम्भवतीति ॥

उच्यते न प्रयाजानां पुरोडाशे ऽस्ति शेषता ।
तद्योग्यत्वेन तेषां तु तदङ्गत्वं प्रतीयते ॥३५॥

यथैवादहत्यपि वन्हौ दाहकव्यपदेशः । तथैव प्रयाजादिष्वपि पशुपुरोडाशार्थमननुष्ठीयमानेष्वपि तद्योग्यतया तदङ्गत्वव्यपदेशः शक्नोत्येव पुरोडाशस्ताननुष्ठापयितुम् । अन्यतस्तु

सिद्धत्वान्नानुष्ठापयति तेनान्यशेषभूतेष्वपि योग्यतया शेषत्वव्यवहारः । अन्ये तु योग्यतैव शेषत्वम् । अतः पुरोडाशे ऽपि प्रयाजादीनां मुख्यमेव तदस्तीति वर्णयन्ति । तथा वा ऽस्तु । सर्वथा तावदुपपन्नः शेषत्वव्यवहार इति सर्वं समञ्जसम् । तदेष संक्षेपार्थः । भावना तावत्स्वशब्देन प्रथममभिधीयते तस्याश्च विधिना समानाभिधानेनान्वयः प्रतीयमानो ऽप्ययोग्यतया न द्रागेव निष्पद्यते । इयं चावस्था विधिप्रक्रम इत्युच्यते विधिप्रक्रमाच्च तदेवं ज्ञायते यादृशैरंशैः पूर्णेयं विधानमर्हति तादृशैः पूरयितव्येति ततः किमस्या भाव्यमित्यपेक्षायां समानपदोपात्तमपि धात्वर्थमयोग्यत्वादुल्लङ्घ्य पदान्तरोपात्तं स्वर्गादि स्वीक्रियते तच्च षष्ठाद्ये व्युत्पादितम् । तदभावे चार्थवादस्थं तदभावे चाध्याह्रियते तच्च रात्रिसत्राधिकरणे विश्वजिदधिकरणे च प्रतिपादितम् । ततः करणापेक्षायां समानपदोपात्तो धात्वर्थ एव करणतया ऽन्वीयतइति भावार्थाधिकरणार्थः । तस्य च करणत्वं क्षणिकस्य कालान्तरभाविफलं प्रति साक्षान्न सम्भवतीति स्थिरद्वारापेक्षायां देवताराधनकर्तृसंस्कारयोर्देवताऽधिकरणे कर्म्मण्यारम्भभाव्यत्वादित्यत्र च निराकृते तद्द्वारत्वे ऽपूर्वमेवमाश्रयितव्यमिति तच्छब्दमध्याहृत्य यागेनापूर्वं कृत्वा स्वर्गं भावयेदित्यपूर्वेतिकर्त्तव्यतायुक्तो यागो ज्वालोपेतकाष्ठादिवत्पाकमिव फलं प्रति करणतया विनियुज्यतइत्यपूर्वाधिकरणेनोक्ते कथमनेनापूर्वं कर्त्तव्यमिति पुनरितिकर्त्तव्यताकाङ्क्षा काष्ठादीनामिव ज्वालासिद्ध्यर्थं जायते तत्र षड्विधेनोपदेशेन त्रिविधेन चातिदेशेन स्मृत्याचाराभ्यां श्रुत्यर्थादिभिश्च यथायथं तेन द्वारेण समर्पितं जातिद्रव्यगुणक्रियाक्रमात्मकमङ्गजातमित्थंभावेन शुष्कत्वादिवत्स्वीक्रियते । अत एव प्रधानं फलप्रयुक्तं तथा प्रकल्पिते ऽपूर्वे दीक्षणीयादिवदकल्पिते चावा-

न्तरापूर्वे प्रधानापूर्वं फलं प्रति विनियुज्यते तेन दीक्षणीयेव परमापूर्वप्रयुक्ता फलप्रयुक्तमेव प्रधानम्। अङ्गन्तु कल्पिते ऽपूर्वे तदङ्गत्वेन दीक्षणीयाङ्गवाङ्गियमवदवान्तरापूर्वाङ्गत्वेन विनियुज्यमानं तद्वदेवावान्तरापूर्वप्रयुक्तं न परमापूर्वप्रयुक्तमिति वेदितव्यम्। ततः सर्वविशेषणविशिष्टभावनानुष्ठानं प्रयोजकत्वाप्रयोजकत्वतन्त्रावापप्रसङ्गतदपवादावगतपरिमाणं श्रुत्यर्थाद्यवगतक्रमसहितं फलार्थिनं सकलाङ्गानुष्ठानक्षमं काम्येषु। नित्यनैमित्तिकेषु तु किं चिदङ्गानुष्ठानाशक्तमपि पुरुषं प्रति विधिर्विधत्तइति। एतत्सर्वं वाक्यार्थसंग्रहरूपेण वार्त्तिकेन "भावनावचनस्तावत्तां स्मारयति लोकवदित्यादिना।

"तस्मात्प्रक्रान्तरूपो ऽपि विधिस्तावत्प्रतीक्षते।
यावद्योग्यत्वमापन्ना भावना ऽन्यानपेक्षिणी"

इत्येवमन्तेन दर्शितमिति वेदितव्यम्॥

भुवनत्रयविख्यातश्रीमद्यज्ञात्मनन्दनः।
तत एव श्रुतं प्राप्य विश्रुतः पार्थसारथिः॥३६॥

मीमांसाब्धिं व्याकुलं चोद्यनक्रैर्मन्दप्रज्ञैर्दुर्विगाह्यं विगाह्य।
प्रत्याचार्यैराहृतैर्न्यायरत्नैर्मालामेनां कल्पयामास धीरः ३७

नमो जैमिनय ❁ ❁ ❁ नोप्यमहीभियिः*।
न्यायदीपैः समुत्तीर्णो ज्वलद्भिरिव भास्यते॥३८॥

इति श्रीमद्यज्ञात्माचार्यसूनोः पार्थसारथिमिश्रस्य कृतौ न्यायरत्नमालायामङ्गनिर्णयः समाप्तः॥

---

* अयं श्लोकः पुस्तकद्वयेऽप्येवमेव दृश्यते।

चौखम्बा-संस्कृत-ग्रन्थमाला ।

( ग्रन्थसंख्या ७ )

# न्यायरत्नमाला ।

निखिलतन्त्राऽपरतन्त्रश्रीमत्पार्थसारथिमिश्रप्रणीता

वाराणसेयराजकीयप्रधानसंस्कृतपाठशालायां

साहित्यदर्शनाध्यापकेन मानवल्ल्युपाह्व-महामहोपाध्याय-

श्री गङ्गाधर शास्त्रिणा परिशोधिता ।

काश्याम्

[त]ारा-यन्त्रालये श्री०-बाबू-हरिदासगुप्तेन फ्रीमैन कम्पनी लिमिटेड द्वारा मुद्रयित्वा प्रकाशिता।

सन् १९०० ईस्वी ।

वैक्रमसम्वत् १०५७ ।

शुभम् ।

# न्यायरत्नमालायाः ।

## भूमिका ।

अथायमारभ्यते न्यायरत्नमालाख्यो मीमांसानिबन्धो मुद्रयित्वा प्रकाशयितुम् । अस्य किल निर्माता मीमांसकशिरोमणिः पार्थसारथिमिश्रो नाम । अस्य विपश्चितामपाश्चात्त्यस्य स्थितिकालो मदनुजमुद्रितश्लोकवार्तिकभूमिकायामवधारित इति तत एवावगन्तव्यः । तत्कृता शास्त्रदीपिका सर्वैरेव समाद्रियते पूर्वमीमांसाऽभियुक्तैः । तस्यामेव प्रथमसूत्रे प्रपञ्चेनायं पक्षो न्यायमालायामेव निरस्त इत्याकलय्य न्यायरत्नमालामन्विष्यद्भिरस्माभिरासादितमेकं पुस्तकं नानाविधपुस्तकसंग्रहरसिकस्य श्रीयुतगोविन्ददासमहोदयस्य पुस्तकालये । अपरं च श्रीमन्नेपालराजगुरुपण्डितवरश्रीहेमराजपण्डितैः सानुग्रहं नेपालादानाय्य दत्तमिति द्वे पुस्तके समवलम्ब्य श्रीमद्रामानुजाचार्यप्रणीतामस्य टीकां श्रीगोविन्ददासमहोदयपुस्तकालये पूर्वार्धमात्रस्योपलभ्य कृत्स्नायामस्यामुपलब्धायां सा मुद्रणीयेति निश्चित्य मूलमात्रमिदानीं पूर्वमीमांसाऽऽलोचनरसिकजनचेतःप्रमोदार्थं प्रकाशयामः । तामिमामालोच्यावधारयन्तु प्राचीनविद्वद्वरविचारशैलीलेखसौष्ठवप्रभृतिगुणगणान् क्षाम्यन्तु च मानवापरिहार्यमतिदृष्टिदोषजनितानि स्खलितानीति मुहुःप्रार्थयमानो विरमामि विस्तरादिति । शुभम् ॥

आश्विन वदि ५ गुरौ<br>
सं० १९५७

मानवल्लयुपाख्यो<br>
गङ्गाधरशास्त्री ।

# न्यायरत्नमालायाः प्रकरणानां सूची ।

# न्यायरत्नमालायाः शुद्धिपत्रम् ।

| पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|
| १७ | तमध्यायर्यी | तमध्यापर्यी |
| १९ | प्रसिद्धा प्रसि | प्रसिद्धाप्रसि |
| २ | स्तेनं | स्तेन |
| ६ | विथि | विधि |
| ११ | स्यात | स्यात् |
| २१ | दृध्वयत | दध्ययत |
| ६ | दूषणम् | दूषणम् |
| २२ | पथि | अपि |
| २३ | कथमग्रेः | कथमग्नेः |
| २४ | ऽवगम्यते | साऽवगम्यते |
| २४ | त्तकाल | तत्काल |
| १४ | भावः | दभावः |
| १४ | गतिकागति | गतिकगति |
| १४ | वाऽद्दष्टे | चाद्दष्टे |
| ९ | र्वेणे | र्वेर्णे |
| १ | अपेक्षतेइत्यादि | स्थूलाक्षरैः |
| १७ | अत्राभिधीयतइत्यादि | स्थूलाक्षरैः |
| १९ | मवे | मेघ |
| १२ | ति । किञ्च न | ति किंचन |
| ४ | रचनाकाङ्क्षा | रचना ऽऽकाङ्क्षा |
| २ | संवादर्शो | संघादर्श |
| १४ | एवासन्निधिः | एव सन्निधिः |
| १६ | कश्च । विष | कश्च विष |
| २२ | स्तस्या | स्तस्याः |
| ५ | मुसुक्षु | मुमुक्षु |
| ६ | मुमानं | नुमानं |

